# सांख्यसूत्रम्

## महर्षि-कपिल-प्रणीतम्



अनिरुद्धकृतवृत्तिसहितम्

आर्य्यप्रभासम्पादकेन वेदोदर्शनविद्यालयाध्यापकेन काव्यतर्कतीर्थोपनाम

**श्रीकुञ्जविहारि-तर्कसिद्धान्तेन**

स्वप्रणीतया तत्त्वबोधिनीसमाख्यटीकया वङ्गानुवादेन च

समलङ्कृत्य प्रकाशितम् ।

वङ्गाब्दाः १३२५ ।

मूल्यं २) रूप्यकद्वयम् ।

# भूमिका।

प्रसिद्धेषु न्यायवैशेषिकसांख्ययोगवेदान्तमीमांसाख्यषड्-दर्शनेषु सांख्यदर्शनं महर्षिकपिलाचार्य्यप्रणीतमिति सर्व्व एव जानन्ति, किन्तु शास्त्रसमालोचनेन त्रयः कपिलाचार्य्याः श्रूयन्ते— तत्रैको ब्रह्मणो मानसपुत्रः, अपरः वैश्वानरावतारः, अपरश्च देवहूति-गर्भजातः कर्द्दममुनितनयो भगवन्नारायणावतारः। सांख्यशास्त्रञ्च द्विविधं दृश्यते—तदेकं द्वाविंशतिसूत्रात्मकं तत्त्वसमासाख्यं आदि-सांख्यत्वेन प्रसिद्धम्, अपरञ्च—षडध्यायात्मकमेतत्। तथाच कतरत् केन कपिलेन प्रणीतमिति सन्देहः स्वत एवोपजायत इति तन्निरा-करणार्थं प्राचीनटीकाकाराणामभिप्राया एवादावालोचनीयाः :—

तत्रच "नन्वेवमपि तत्त्वसमासाख्यसूत्रैः सहास्याः षडध्याय्याः पौनरुक्त्यमिति चेन्मैवं संक्षेपविस्तररूपेणोभयोरप्यपौनरुक्त्यात्-" इत्यादिसन्दर्भेणोभयोरेव सांख्यशास्त्रयोरेक एव कपिलः प्रणेतेति "तदिदं सांख्यशास्त्रं कपिलमूर्त्तिर्भगवान् विष्णुरखिललोकहिताय प्रकाशितवान्, यत्तत्र वेदान्तिब्रुवः कश्चिदाह—सांख्यप्रणेता कपिलो न विष्णुः, किन्त्वग्न्यवतारः कपिलान्तरम् 'अग्निः स कपिलो नाम सांख्यशास्त्रप्रवर्त्तक' इति श्रुतेरिति तल्लोकव्यामोहनम् 'एतन्मे जन्म लोकेऽस्मिन् मुमुक्षूणां दुराशयात्। प्रसंख्यानाय तत्त्वानां सम्मतायात्म-दर्शनम्॥' इत्यादि स्मृतिषु विष्णवतारस्य देवहूतिपुत्रस्यैव सांख्यो-पदेष्टृत्वावगमात् कपिलद्वयकल्पनागौरवाच्च। तत्र चाग्निशब्दो-ऽन्यशाख्यशक्त्यावेशादेव प्रयुक्त" इत्यादिसन्दर्भेण स कपिलो विष्ण्वतार इति च विज्ञानभिक्षोर्म्मतं स्पष्टमेव गम्यते।

आचार्य्यवर्य्यगौरपादस्वामिना च सांख्यकारिकाभाष्यप्रारम्भे "इह भगवान् ब्रह्मसुतः कपिलो नामे"त्यादि सन्दर्भेण ब्रह्मसुत-कपिलस्यैव सांख्यप्रणेतृत्वमङ्गीकृतम्।

आदिसांख्यीयसर्व्वोपकारिणीसमासटीकाकारश्च "अथात्रा-

नादिक्लेशकर्म्मवासनासमुद्रपतितान् अनाथानुद्दिधीर्षुः परम-
श्री कृपालुः स्वतःसिद्धज्ञानो महर्षिर्भगवान् कपिलो ब्रह्मसुतो द्वाविंशति-
सूत्राण्युपादिक्षत्, सूचनात् सूत्रमिति हि व्युत्पत्तिः, तत एतैः
समस्ततत्त्वानां सकलषष्टितन्त्रार्थानां सूचनं भवति। ततश्चेदं सकल-
सांख्यतीर्थमूलभूतम्, तीर्थान्तराणियतत् प्रपञ्चभूतान्येव। षड्-
ध्यायी तु वैश्वानरावतारभगवत्कपिलप्रणीता। इयञ्च द्वाविंशति-
सूत्री तस्या अपि बीजभूता, ब्रह्मसुतमहर्षिभगवत्कपिलप्रणीतेति वृद्धा
वदन्ती"ति सन्दर्भेण आदिसांख्यस्य ब्रह्मसुतकपिलप्रणीतत्वं एतत्-
षड्ाध्यायी सांख्यस्य च वैश्वानरावतारकपिलप्रणीतत्वं स्पष्टमाचष्ट।

एवं स्थितायां विप्रतिपत्तौ कस्य मतं वास्तविकमित्यस्य दुर्व्व-
चत्वेऽपि "अग्निः स कपिलो नाम सांख्ययोगप्रवर्त्तक" इत्यन्तमहा-
भारतीयश्लोके अग्निपदस्यौपचारिकत्वप्रसङ्गेन देवहूतिपुत्र-
कपिलेन स्वमात्रे कथितस्य भागवतग्रन्थीयसांख्ययोगस्य एतत्
षड्ध्यायीसांख्यविपरीतत्वेन च विज्ञानभिक्षोर्मतं न समीचीनं
विवेचयामः। परन्तु निरुक्तसर्व्वोपकारिणीसमाख्यटीकाकार-
मतस्यैव साधुत्वं मन्यामहे, यतस्तथात्वे "अग्निः स कपिलोनामे"
त्यादिमहाभारतश्लोकीयाग्निपदस्य सारसिकत्वं शुकदेवशिष्यत्वे-
नातिप्रामाणिकानां प्राचीनतमगौरपादस्वामिनां वचसः प्रामाण्यञ्च
सुरक्षितं भवति। एवञ्च देवहूतिपुत्रः कपिलः कश्चित् सांख्यग्रन्थं
न प्रणिनाय, परन्त्वाजन्मसिद्धतत्त्वज्ञानः स स्वमात्रे एव सांख्ययोग-
मुपदिदेश" इत्येतावदुक्तैव "एतन्मे जन्मलोकेऽस्मि"न्नित्यादि
भागवतवचनप्रामाण्यमपि न व्याहन्येत, इतोऽतावदुक्त्वैव विचार-
चतुराणां सतां शिरसि निर्द्धारणभारमगत्या समर्प्यात्र विरमामः।

एतत्षड्ध्यायी सांख्यस्य—अनिरुद्धवृत्तिः, विज्ञानभिक्षुकृत-
प्रवचनभाष्यं, वेदान्तिमहादेवकृतटीकाचेति त्रीणि व्याख्या-
पुस्तकानि दृश्यन्ते। तत्रानिरुद्धवृत्तितो वेदान्तिमहादेवकृतटीकाया
अर्व्वाचीनत्वं।

"दृष्ट्वानिरुद्धवृत्तिं बुद्ध्वा सांख्यीयसिद्धान्तं ।
विरचयति वृत्तिसारं वेदान्त्यादिमहादेवः ॥"

इति तद्वचनेनैव स्पष्टमायातीत्यत्र नास्ति वक्तव्यावसरः ।

प्रवचनभाष्ये यद्यप्यनिरुद्धवृत्तेर्नामोल्लेखो नास्ति, तथापि अनिरुद्ध-वृत्तिव्याख्यानपाठानामिव "प्रकृतिनिबन्धना चेदिति पाठे (१।१६१) अन्नसम्बन्धात् मासित्वमिति पाठे (५।८२) इतरवियोगवदिति पाठे (६।५०) इत्यादिभिर्भाष्यसन्दर्भैर्विधृतत्वेन द्वितीयाध्यायस्य षट्चत्वारिंशतमसूत्रप्रवचनभाष्ये "यत्तु कश्चिदविवेकी वदती"त्यादि सन्दर्भेण तृतीयाध्यायस्य नवमसूत्रप्रवचनभाष्ये "न तु सप्तदशमेकञ्चे-त्यष्टादशतयाव्याख्येय"मित्यादिसन्दर्भेण पञ्चमाध्यायस्य शततम-सूत्रप्रवचनभाष्ये "कश्चित्त्वि"त्यादि सन्दर्भेण एवमन्यत्रापिच भाष्यसन्द-र्भविशेषेणानिरुद्धकृतव्याख्यानानां दूषितत्वेन च अनिरुद्धवृत्तिं दृष्ट्वैव प्रवचनभाष्यं विरचितमित्यनुमातुं शक्यत इति प्रवचनभाष्य-मप्यनिरुद्धवृत्तेः परवर्त्तीत्युपपद्यत इति युक्तम् ।

अनिरुद्धस्तु कदा कं देशं जन्मनालमकरोदित्यत्र स्पष्टं प्रमाणं नोपलभ्यते, परन्तु वाचस्पतिमिश्रान्माधवाचार्य्याच्चार्व्वाचीनः प्रवचन-भाष्यकारविज्ञानभिक्षोः प्राचीनश्चायमनिरुद्धः खृष्टीयपञ्चदशशता-ब्दीयांशविशेषे भारतस्यैव कुत्रचित् जन्म जग्राहेति प्रत्नतत्त्वविदः । वाचस्पतिमिश्रात् माधवाचार्य्याच्चार्व्वाचीनत्वञ्चास्य प्रथमाध्यायस्य विंशत्यधिकशततमसूत्रवृत्तौ "दृष्टश्चाभिव्यक्तिः पीड़नेन तिलेषु-तैलस्ये"ति तत्त्वकौमुदीसन्दर्भाविकलोपन्यासेन तस्यैव चतुस्त्रिंशत्तम-सूत्रवृत्तौ "सत्त्वमर्थक्रियाकारित्वं तच्च क्रमाक्रमाभ्यां व्याप्त" मित्यनेन "तच्चार्थक्रियाकारित्वं क्रमाक्रमाभ्यां व्याप्त" मित्यस्य सर्व्वदर्शन-संग्रहबौद्धदर्शनसन्दर्भस्यानुकरणेन चानुमीयत इत्यास्तां विस्तरः ।

अनिरुद्धवृत्तेर्दुर्लभता च तत्पठनपाठनशीलानां सर्व्वेषामेव सुविदिता सूक्ष्मानुसन्धाननियतानाम् । तत्र च मुद्रितपुस्तकानाम-शुद्धिरेव प्रधानतः कारणमिति मन्यमानेन अगतपुराश्रमे तदध्यापन-

व्यासक्तेनैव मया पुस्तकत्रयं संगृह्य तत्संशोधने दुरूहस्थलानां विशदीकरणे च मनो निवेशितम्। ततो विद्यार्थिसार्थमुखपरम्परया तदवगत्य कतिपयैः परमसुहृत्पण्डितप्रवरैरुत्साहितेन कतिपयार्य्यप्रभाग्राहकैः साग्रहमनुरुद्धेन च मसूत्रानिरुद्धवृत्तिं सुविस्तृतटीकया वङ्गानुवादेन च यथामति विशदीकृत्य क्रमश आर्य्यप्रभायां प्रकाशयितुमारभ्य नानाविधविघ्नपराहतेनापि मया परमेश्वरस्यापारकरुणया सम्प्रति तत्प्रकाशनं समाहितम्। तत्समाधाने च निरुक्तपुस्तकेषु यस्य पाठः समीचीनतया विवेचितः, स एव सन्निवेशितो व्याख्यातश्च, कदाचित् पाठान्तरमपि प्रदर्श्य व्याख्यातम्। यत्रच पुस्तकत्रयस्थित एकविध एव पाठः प्रयतमानेनापि मया योजयितुं नापारि,तत्र प्रमादस्खलनादिकं सम्भाव्य पदविशेषपरिवर्ज्जनपरिवर्द्धनपरिवर्त्तनैरपि पाठः सन्निवेशितः। तत्परिवर्ज्जनादौ वृत्तिव्याख्याने च यदि मम कश्चित् प्रमादं परिलक्ष्य केचित् कृपया मत्कारणं विज्ञापयेयुस्तदा सादरं तन्मतं ग्रहणीयमिति सततस्तत्र प्रवर्त्तिष्यामिति सविनयमभ्यर्थये।

एतदप्यत्र वक्तव्यम्—पुस्तकस्यास्य मुद्रापणसंशोधनादेर्भारस्य परहस्तन्यस्ततया स्थाने स्थाने व्यवस्थितास्वशुद्धिषु अर्थावगमव्याघातिकानामेव शोधनप्रकारः, शुद्धिपत्रे प्रदर्शनीयः, इतरासान्तु वाचकैः स्वत एवोहनीय इति।

परन्तु वक्तव्यं—कलिकाताप्रवासिना परमस्नेहास्पदेन श्रीमता नगेन्द्रनाथसिद्धान्तरत्नेनास्य मुद्रापणादिविधौ परमं साहाय्यं कृतमिति स सर्व्वान्तःकरणेनाशीर्व्वादार्ह इति।

परिशेषे च वक्तव्यमेतावदेव—यदि मत्कृतयानया टीकया वङ्गानुवादेन चानिरुद्धवृत्तिः पाठार्थिनामणुरप्युपकारः साधयिष्यति तदैव मे सर्व्वं परिश्रमादिकं सफलं भवेदिति शम्॥

श्रीकृष्णविहारिशर्म्मणः।

# शुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृष्ठ | पंक्ती |
|---|---|---|---|
| सुवचो ... | सद्वाणी ... | १ | ४ |
| परवैराग्यात् ... | परवैराग्याभ्यामत ... | २ | ३ |
| मङ्गलाय ... | मङ्गलार्थः ... | ३ | ४ |
| वर्त्तमानारम्भः ... | वर्त्तमानावस्थ ... | ६ | ९ |
| वैद्यादयो वसन्ति ... | वैद्यादयः सम्भवन्ति ... | १० | ३ |
| रागादिना ... | रागादीत्यादिना ... | १० | १२ |
| मोहः ... | मोक्षः ... | ११ | ६ |
| प्रतारणावाक्यं ... | प्रतारणावाक्य ... | १५ | १९ |
| शङ्काद्रवाभ्या ... | शङ्काद्रवानुद्भवाभ्या | १६ | २ |
| दग्धबीजैनेत्यादिना .. | दग्धबीजैनेत्यादिः | १६ | ६ |
| शुक्लत्वस्यैव ... | शुक्लत्वस्य व ... | १६ | ८ |
| चिवितावगतः वगतः ... | विनिश्चितावगतः ... | १६ | २३ |
| सम्यगायातम ... | सम्यातायातम ... | १८ | ३ |
| कार्य्यजनन ... | कार्य्यजनने ... | २२ | ८ |
| यत इत्यादि ... | यत इत्यादि ... | २२ | १४ |
| घटते ... | न घटते ... | २३ | १६ |
| नाशप्रतियोगित्वरूपा ... | नाशाप्रतियोगित्वरूपा .. | २६ | १२ |
| नाङ्गीकुर्म्मः .. | चाङ्गीकुर्म्मः ... | २८ | ६ |
| स्थित्यभावात् को बन्धः | स्थित्यभावात केन को बद्ध | २९ | ६ |
| नक्षप्रवादादिति न पाठेन | नक्षप्रवादादिति पाठे न | २९ | ९ |
| सम्बन्ध चानिते ... | सम्बन्धजनित ... | २९ | २६ |
| वाद्यो कर्दिशेनासम्बन्धा | वाद्यो कर्दिशेनात्मसम्बन्धा | ३१ | ५ |
| स्थायित्वा .. | स्थायित्वाभावा ... | ३१ | ६ |
| सन्तानस्या ... | सन्तानस्य ... | ३१ | ७ |
| विषमोपरागा ... | विषयोपरागा .. | ३२ | २ |
| दृष्टान्तसिद्धिरूपं ... | दृष्टान्तासिद्धिरूपं ... | ३४ | १३ |
| तथा न स्वमते दृष्टान्तसिद्धि | तथाच न स्वमते दृष्टान्तासिद्धिः | ३५ | १० |
| कार्य्यस्यसिद्धेः ... | कार्य्यस्यासिद्धेः ... | ३५ | १३ |
| यद्यत् स ... | यद्यत् सत् ... | ३५ | १६ |
| क्षणिके स्थिरत्वे नाभि | क्षणिके—स्थिरत्वेनाभि | ३६ | ४ |
| न कल्पनपथ ... | कल्पनपथ ... | ३६ | १४ |
| आक्रमेण कार्य्योत्पादपक्षोपि | अक्रमेण कार्य्योत्पादपक्षेपि | ३७ | १२ |
| नचेति ... | नवेति .. | ३८ | १७ |
| निर्जर फल्गु ... | फल्गु निर्जर ... | ३९ | १८ |
| विषयि ... | विषाद ... | ३९ | २५ |

| | | | |
|---|---|---|---|
| साधनाभावे ... | साधनाभावेर ... | ४० | ३५ |
| अवयवी । न ... | अवयवी न ... | ४७ | १० |
| भावस्य ... | तदा भावस्य .. | ५३ | ८ |
| व्यवहारहेत: ... | व्यवहारहेतुत्वम ... | ५५ | ६ |
| अभावाय ... | स्वस्य अभावाय ... | ५७ | ११ |
| यथाच ... | तथाच ... | ५८ | ३ |
| अयमपि ... | पयमप ... | ५९ | ३ |
| वाङ्मात्रं तु न ... | वाङ्मात्रं न तु ... | ६८ | ८ |
| वाक्यं ... | वाक्यानि ... | ७१ | ५ |
| प्रकृतेश्वानं ... | प्रकृतेर्मूलकारणस्य प्रधानस्य ज्ञानं | ७३ | ७ |
| प्रकृते: ... | प्रकृतेरपि .. | ७४ | ३ |
| प्रकृते: ... | यतप्रकृते: ... | ७५ | ४ |
| तस्माद्महत्त्वं बुद्धि .. | तस्माद्दत् महत्तत्त्वं बुद्धि: तदेव | ७९ | ४ |
| कारणमात्र ... | कारणकत्वस्य ... | ८५ | ८ |
| यथा ... | यथा ... | ९७ | ३ |
| प्रत्यक्षलक्षण ... | प्रत्यक्षलक्षणं युक्त ... | ९८ | १ |
| क्षित्यादि ... | चित्यादि ... | १०० | ६ |
| मृतशरीरस्य ... | नहि मृतशरीरस्य ... | १०५ | १ |
| आप्तोपदेश: ... | आप्तो युक्त: उपदेश: ... | १०८ | ५ |
| त्वं यथा ... | त्वं यथात .. | १२६ | ४ |
| किं ... | तत किं ... | १२९ | १ |
| एव ... | एवं ... | १३४ | ८ |
| द्रवकठिनता ... | द्रवकठिनतादिमत्त्वं ... | १३८ | ५ |
| तस्य ... | तस्यैव . | १४० | ८ |
| न तात्त्विक: ... | स न तात्त्विक: ... | १६० | ६ |
| तस्मादपि ... | तस्मादपि चेति ... | १६१ | ६ |
| अन्तर्बहिराकार ... | आन्तरापि बहिराकार | १७८ | २ |
| आरम्भकस्य भावत्व ... | आरम्भकस्वभावत्वे ... | १८४ | ४ |
| दैर्घ्योपि ... | दैर्घ्येऽपि ... | २३० | ५ |
| मायात्वं ... | माविद्यात्वं . ... | २५६ | ६ |
| विशेषापच: ... | विशेषापेच: ... | ३०४ | १ |
| इयत्तं ... | इयत्ता ... | ३०७ | ४ |
| न नियम: | न नियम: यथा दृष्टत्वात् । घड़े वेति च न नियमो अन्यथापि सम्भवात् ॥ ११ ॥ | ३२७ | ४ |
| अधिमात्रत ... | अधिमात्रस्य ... | ३४९ | ७ |

टीकावल्यानुवादयोर्मुद्राकरप्रमादकृतान्यशुद्धानि वाचकमहोदयैरेव शोधनीयानि ।

# साङ्ख्यसूत्रवृत्तिः ।

——:०:——

## प्रथमोऽध्यायः ।

—:०:—

विनायकं नमस्कृत्य विष्णुं सूर्य्यं सरस्वतीम् ।
लक्ष्मीं गङ्गां महेशानं वृत्तिं कर्त्तुं समारभे ॥

पुरुषः खलु वैराग्यात् मोक्षशास्त्रे प्रवर्त्तते । वैराग्यं च द्वेधा

---

प्रणम्य वाणीं सुवचोविन्यासाभ्यासदायिनीं ।
तर्कसिद्धान्तसिद्धेन विप्रकुञ्जविहारिणा ॥
अनिरुद्धकृता वृत्तिः साङ्ख्यसूत्रस्य दुर्गमा ।
व्याख्यया तत्त्वबोधिन्या विशदीक्रियतेतराम् ॥

प्रारिप्सितग्रन्थपरिपन्थिविघ्नविघाताय शिष्टाचारपरम्पराप्राप्तं नमस्काररूपं मङ्गलमाचरन् वृत्तिग्रन्थारम्भं प्रतिजानीते—विनायकमित्यादिना । शास्त्रारम्भप्रयोजनाभिधानाय भूमिका-मारचयति—पुरुष इत्यादिना । खलु—निश्चयं, वैराग्यात—अपरवैराग्यादित्यर्थः, परवैराग्यस्य मोक्षशास्त्रप्रवृत्त्युत्तरभूमिकतया तद्धेतुत्वानुपपत्तेः । शास्त्रे प्रवर्त्तनसम्भवात् शास्त्रपदमत्र शास्त्र-विहितानुष्ठानादिपरं, तथाच मोक्षशास्त्रे—मोक्षशास्त्रविहितप्रव्रज्याग्रहणाद्यनुष्ठाने इत्यर्थः, अतएवैतत्समर्थनपरं "यदहरेवे" त्यादि श्रुतिप्रदर्शनमपि साधु सङ्गच्छते । परापरभेदेन वैराग्यं द्विविधं तयोरपरवैराग्यस्य पुनः कारणभेदेन द्वैविध्यं दर्शयति—वैराग्यञ्च द्वेधेति ।

গ্রন্থারম্ভে বিঘ্নবিঘাতের জন্য নমস্কার করা শিষ্টাচারসিদ্ধ, তাই বৃত্তিকার নমস্কার করিয়া শাস্ত্রারম্ভের প্রতিজ্ঞা করিতেছেন—

আমি গণেশ, বিষ্ণু, সূর্য্য, সরস্বতী, লক্ষ্মী, গঙ্গা ও মহেশ্বরকে নমস্কার করিয়া বৃত্তি আরম্ভ করিতেছি।

स्यात्, शोकादिना, जन्मान्तरीयदुरितक्षयाद्वा। तथा च श्रुतिः—'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इति। (जावाल उपं ४ मन्त्रः), शास्त्रे प्रवृत्तस्य परवैराग्यात्, तथाचाह पतञ्जलिः—"दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यं" "तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्" इति (समां पां १५।१६ सूत्रे)। एतदेव परवैराग्यं वक्ष्यम्

शोकादिनेत्यादिना विषयदोषदर्शनपरिग्रहः, जन्मान्तरीयाणां प्राक्तनजन्मप्रभवानां दुरितानां क्षयात् तीर्थदर्शनादिना विनाशात्, अत्र दुरिते "जन्मान्तरीय" इति विशेषणं एतज्जन्मोत्पन्नदुरितानामुपलक्षकमपि प्रारब्धव्यावृत्त्यर्थं, प्रारब्धस्य भोगमन्तरेण क्षयासम्भवात्, तत्सत्त्वेऽपि वैराग्योदयात्। वैराग्यात् मोक्षशास्त्रे प्रवर्त्तत इति यदुक्तं तत्समर्थनाय जावालश्रुतिमुत्थापयति—तथाच श्रुतिरिति। यदहरेव विरजेत् वैराग्यं लभेत, तदहरेव प्रव्रजेत् प्रव्रज्यां गृह्णीयात्, न तु विलम्बं कुर्य्यादिति श्रुत्यर्थः। तथाचानया श्रुत्या वैराग्यस्य प्रव्रज्याग्रहणरूपमोक्षशास्त्रविहितानुष्ठानप्रवृत्तिहेतुत्वमेव फलतः प्रतिपादितं भवति। ततः किं स्यादित्याकाङ्क्षायामाह—शास्त्रप्रवृत्तस्येति, अपरवैराग्येण गृहीतसन्न्यासाश्रमादिरूपमोक्षशास्त्रविहितानुष्ठान इति तदर्थः। परवैराग्यादिति रागद्वेषादिविध्वंसनादिक्रमेण लब्धादित्यादिः। वैराग्ययोः स्वरूपं प्रदर्शयितुं पतञ्जलेः सूत्रद्वयमुत्थापयति—तथाचेत्यादिना। दृष्टेति, दृष्टः प्रत्यक्षः ऐहिकः कामिनीकाञ्चनादिः,

পুরুষ নিশ্চয় অপর বৈরাগ্যবশতঃ মোক্ষশাস্ত্রবিহিত সন্ন্যাস গ্রহণাদি অনুষ্ঠানে প্রবৃত্ত হয়। অপর বৈরাগ্য দুই প্রকার, শোকাদি বশতঃ এক প্রকার বৈরাগ্য হয়, এবং জন্মান্তরের পাপক্ষয় হইলে এক প্রকার বৈরাগ্য হয়। অপর বৈরাগ্য বশতঃই যে সন্ন্যাসগ্রহণাদি অনুষ্ঠান প্রবৃত্ত হয়, এ বিষয়ে শ্রুতিও আছে, "যখন বৈরাগ্য লাভ করিবে, তখনই সন্ন্যাস গ্রহণ করিবে" সন্ন্যাসাদি গ্রহণ করিলে রাগদ্বেষাদি বিধ্বংসক্রমে লব্ধপরবৈরাগ্য বশতঃ পুরুষ মুক্তিলাভ করে। ভগবান্ পাতঞ্জলি মুনি বলিয়াছেন—"ঐহিক ও পারত্রিক সমস্ত বিষয়ে অনুরাগশূন্যের বশীকারসংজ্ঞার (বিষয় সকল আমার

अतिपरमकारुणिको महामुनिः जगदुद्दिधीर्षुः कपिलो मोक्ष-शास्त्रमारभमाणः प्रथमसूत्रं चकार—

## अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः ॥ १ ॥

अथेत्ययं मङ्गलाय, न तु कर्मानन्तर्य्यार्थः, 'यदहरेव' इत्यादि-

---

गुरुपाठादनुश्रूयत इति अनुश्रवो वेदः तत्र भवः आनुश्रविकः वेदप्राप्तः स्वर्गादिः, तत्स्वरूपो यो विषयः भोग्यः, तत्र वितृष्णस्य वशीकारसंज्ञा ममैते विषया वश्याः नाहमेतेषां वश्य इत्येवं विमर्शः वैराग्यं अपरवैराग्यमिति सूत्रार्थः । यद्यप्यत्रापरशब्दो नास्ति, तथापि परसूत्रे परशब्दोपादाना-दनेनापरवैराग्यमेवोक्तमिति मन्तव्यम् । तत्परमिति, पुरुषख्यातेः आत्मसाक्षात्कारात् हेतोः जायमानमिति शेषः, गुणेषु व्यक्ताव्यक्तधर्म्मकजड़विषयेषु वैतृष्ण्यं रागाभावः, तत् वैराग्यं परं परसंज्ञकं श्रेष्ठमित्यर्थः ।' तथाचात्मसाक्षात्कारजन्मगुणवैतृष्ण्यं परवैराग्यमिति लक्षणं फलितम् । प्रकृतमुपसंहरति—एतदेव परवैराग्यमिति, पातञ्जलसूत्रबोधितमेव परवैराग्यमित्यर्थः । ऋथैतत्परवैराग्याभिधानार्थमेव यदि शास्त्रारम्भस्तर्हि विज्ञानस्याव्यक्तादिमहाभूतान्तानाञ्च प्राधान्येन निरूपणमफलं न च परं वैराग्यं यस्मादिति बहुव्रीहिणा परवैराग्यशब्द एवात्र विवेकज्ञानपर इति तन्निरूपणमेव प्रकृतं, तन्निरूपणार्थञ्चाव्यक्तादीनां निरूपणमिति समीचीनं वचः, तथा सति समीपतरवर्त्तिपरवैराग्यपरामर्शकैतच्छब्दस्यालग्नतापत्तेरिति चेन्न परवैराग्यहेतुभूतस्य विज्ञानस्य तद्विषयाणामव्यक्तादीनाञ्च स्वरूपनिर्द्धारणं विना परवैराग्यस्वरूपनिर्द्धारणं दुष्करमिति मत्वैव परमकारुणिकेन महामुनिना तेषां निरूपणात् ।

सूत्रीयमथपदं व्याचष्टे—अथेत्यादि । अयं सूत्रघटकः अथ इति शब्दः मङ्गलार्थः, मङ्गल-

---

বশ্য আমি বিষয়ের বশ্য নহি এইরূপ জ্ঞানের ) নাম অপর বৈরাগ্য” প্রকৃতি হইতে নির্গুণ নিষ্ক্রিয় আত্মা পৃথক্, এইরূপ তত্ত্বজ্ঞান বশতঃ প্রকৃতি ও তৎকার্য্য জড়বর্গ বিষয়ে অনুরাগ না হওয়ার নাম পর বৈরাগ্য।” এই পর বৈরাগ্য বলিবার জন্যই অতি পরম কারুণিক মহামুনি কপিল জগতের উদ্ধারেচ্ছু হইয়া মোক্ষশাস্ত্র আরম্ভ করতঃ প্রথম সূত্র করিয়াছেন

श्रुतेरानन्तर्य्यस्य अप्रयोजनत्वात् । कर्म्मारम्भे च मङ्गलकरणं न्याय्यं, अथशब्दस्य मङ्गलवाचको दृश्यते—

ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्त्वा विनिर्यातौ तस्मात् माङ्गलिकावुभौ ॥ इति ।

---

प्रयोजनक इति योजना । कर्म्मणोऽपि साक्षात्प्रव्रज्याग्रहणादिहेतुत्वं वदतां मतं खण्डयति—नत्विति, कर्म्मानन्तर्य्यार्थः—कर्म्मानन्तर्य्यवाचकः । अत्र हेतुं दर्शयति—यदहरेवेत्यादि । आनन्तर्य्यस्य कर्म्मानन्तर्य्यस्य, अप्रयोजनत्वात्—प्रयोजनाभावात् अपेक्षाविरहादिति यावत् । तथाहि यदहरेवेत्यादि श्रुत्या वैराग्यानन्तर्य्यस्यैव फलतः सूचनात् कर्म्मानन्तर्य्यस्य प्रसङ्गोऽपि नास्तीति भावः । कर्म्मारम्भे—कार्य्यानुष्ठानाव्यवहितपूर्व्वक्षणे, मङ्गलाचरणं अथशब्दोच्चारणादि माङ्गलिकानुष्ठानं न्याय्यं—विघ्नविघाताय कृतत्वेन शिष्टाचारपरम्पराप्राप्तं । मङ्गलवाचक इति, अत्र वाचकशब्दो साधकपरः, अथशब्दस्य वस्तुगत्या मङ्गलवाचकत्वाभावात् अन्यार्थमीयमानोदकुम्भदर्शनवदन्यार्थप्रयुक्ताथशब्दस्यापि श्रवणोच्चारणाभ्यां मङ्गलसाधकत्वात् "ॐकारश्चाथशब्दश्चे"ति श्रुतेर्माङ्गलिकशब्दस्यापि मङ्गलसाधकपरत्वात् ब्रह्मसूत्रभाष्यादौ शङ्करादिभिरथशब्दस्य मङ्गलवाचकताया अनभ्युपगमाच्च । अतएवैतद्भाष्यकारेण विज्ञानभिक्षुणापि एतदथशब्दस्यैवाधिकारार्थत्वं स्वीकृत्योच्चारणमात्रेणैव माङ्गलिकत्वमुक्तमित्यनुसन्धेयम् ।

ननु आधिभौतिकाधिदैविकातिरिक्तमपि व्याध्यादिजनितं शारीरं, अभिलषिताप्राप्त्यादि-

---

"আধ্যাত্মিক, আধিভৌতিক ও আধিদৈবিক এই ত্রিবিধ দুঃখের অত্যন্ত নিবৃত্তি অর্থাৎ বর্ত্তমান সমস্ত দুঃখের অতীতাবস্থা এবং কোন কালেও আর দুঃখের আবির্ভাব না হওয়াই পরম পুরুষার্থ।"

সূত্রের "অথ" শব্দ মঙ্গলসাধক কর্ম্মানন্তর্য্যের বাচক নহে, যে হেতু "যদহরেব বিরজেৎ"ইত্যাদি শ্রুতিতে কর্ম্মানন্তর্য্যের কোন প্রসঙ্গই নাই। শাস্ত্রারম্ভে মঙ্গলাচরণ করা ন্যায্য, অথশব্দও মঙ্গলসাধক দেখা যায়—"পূর্ব্বকালে ওঙ্কার ও অথ এই দুইটি শব্দ ব্রহ্মার কণ্ঠ ভেদ করিয়া নির্গত হইয়াছিল,

त्रिविधदुःखेति, शारीरमानसिकयोः आध्यात्मिकत्वेन संग्रहणात् एकत्वम्। आधिभौतिकं पशुपक्ष्यादिजनितम्, आधिदैविकं ग्रह-भूतादिजनितम्। नन्वेवं तेषां निवृत्तिः स्वत एव भवति, सुखदुःखानां क्षणावस्थायित्वात्, अत आह—अत्यन्तेति। न दुःखविशेषाणां निवृत्तिरभिमता, किन्तु दुःखजातीयानाम्। भविष्यतामपि हि निवृत्तिः

---

निबन्धनं मानसञ्चेति द्विविधं दुःखमनुभूयते, तत् कथं दुःखं त्रिविधमित्याशङ्कायां तयोराध्यात्मिकत्वं व्यवस्थापयति—शारीरमानसिकयोरित्यादिना। तथाहि—आत्मानं स्वसङ्घातं आन्तरोपायमिति यावत, अधिकृत्य प्रवृत्तं आध्यात्मिकमिति व्युत्पत्त्या शारीरमानसिकयोरुभयोरेवान्तरोपायसाध्यत्वेनाध्यात्मिकत्वान्न त्रिविधत्वहानिरिति भावः। भूतानि प्राणिनः अधिकृत्य प्रवृत्तं आधिभौतिकं। देवान् ग्रहादीन् अधिकृत्य प्रवृत्तमित्याधिदैविकं। यद्यपि सर्व्वमेव दुःखं मानसं तथापि मनोमात्रजन्यत्वमत्र मानसत्वं ग्राह्यमिति नान्यत्रातिप्रसङ्गः। सूत्रघटक-प्रथमात्यन्तपदस्य व्यावृत्तिमभिधित्सुः शङ्कते—नन्विति। "क्षणगे"त्यत्र "क्षणिके"ति क्वचित् पाठः, तत्र त्वीति सम्पातायातमेव सुखदुःखादीनां क्षणावस्थायित्वस्यैव व्यवस्थापितत्वात्। परिहरति—अत आहेति, अत्यन्तपदस्य प्रयोजनमेव स्पष्टयति—न दुःखविशेषाणां निवृत्तिरिति। निवृत्तिरत्रातीतावस्थत्वमेव न तु ध्वंसः, सांख्यमते अतिरिक्ताभावानभ्युपगमात्। न च तत्त्वत्वे-नाभिमतानां भावानामेव मुनिना परिगणनात् अतिरिक्ताभावस्वीकारेऽपि न सिद्धान्तविरोध

---

সুতরাং এই উভয়ই মঙ্গলসাধক" রোগাদিজনিত শারীরিক দুঃখের এবং অভিলষিতের অপ্রাপ্ত্যাদিনিমিত্তক মানসিক দুঃখের ও আধ্যাত্মিকরূপে গ্রহণ করায় একত্ব আছে ( অর্থাৎ এই দ্বিবিধ দুঃখকে আধ্যাত্মিকরূপে এক ধরিয়াই দুঃখকে তিন প্রকার বলা হইয়াছে ), পশুপক্ষী প্রভৃতি প্রাণিসমূহ হইতে উৎপন্ন দুঃখের নাম আধিভৌতিক। গ্রহভূতাদি হইতে উৎপন্ন দুঃখের নাম আধিদৈবিক "সেই ত্রিবিধ দুঃখের নিবৃত্তি ত স্বতঃই হইতে পারে, যেহেতু সুখদুঃখাদিমাত্রই ক্ষণস্থায়ী," এই আশঙ্কাতেই সূত্রে অত্যন্ত পদ প্রদত্ত হইয়াছে। ত্রিবিধ দুঃখবিশেষের নিবৃত্তি অভিমত নহে, কিন্তু বর্ত্তমান সমস্ত

अत्यन्तशब्दार्थः। धर्मार्थकाममोक्षाणां पुरुषार्थत्वं, न तु त्रयाणाम् अत्यन्तत्वं, क्षयित्वात् विषयजसुखत्वाद्वा। मोक्षस्य च न तथा. नित्यत्वात् प्रकाशरूपत्वात्। अत उक्तं "अत्यन्तपुरुषार्थ इति ॥ १ ॥

---

ति वाच्यं, तावतापि नासदुत्पद्यते न च सद्विनश्यतीति सिद्धान्तव्याघातापत्तेर्दुर्व्वारत्वात्। दुःखजातीयानां वर्त्तमानावस्थसमस्तदुःखानामित्यर्थः, निवृत्तिरभिमतेति सम्बन्धः। नन्वेवमपि क्षतौ किमायातम्? दुःखमात्रस्यैव द्विक्षणमात्रावस्थायित्वेन वर्त्तमानावस्थसमस्तदुःखानामपि निवृत्तिः स्वत एव सम्भवादित्यतोऽत्यन्तपदस्य फलान्तरं दर्शयति—भविष्यतामपीति। अनागतावस्थानामपीत्यर्थः, दुःखानामिति शेषः, निवृत्तिः—अनाविर्भावः। तथाच तत्पुरुषीयवर्त्तमानावस्थसमस्तदुःखानामतीतावस्थत्वं तत्पुरुषीयानागतावस्थसमस्तदुःखानामनाविर्भावश्च तत्पुरुषीयात्यन्तदुःखनिवृत्तिरिति फलितं, तत्र च अनागतावस्थदुःखानाविर्भावायैव तत्त्वज्ञानस्योपयोगः, अतएवोक्तं भगवता पतञ्जलिनापि "हेयं दुःखमनागत" मिति। न च कदाचिदप्यवर्त्तमानावस्थाना अनागतावस्थदुःखानां सत्त्व एव प्रमाणं नास्तीति कथं तदाविर्भावाभावस्य पुरुषार्थत्वमिति वचनीयं दाहादिशून्यवह्न्यादेः क्वाप्यदर्शनात्, स्वस्वकार्य्यजननशक्त्या वह्न्यादीनां स्थायित्वस्य पातञ्जलादिसिद्धान्तसिद्धतया तत्तच्छक्तेश्च अनागतावस्थतत्तत्कार्य्यरूपतया तावदेव तादृशदुःखसत्त्वस्यानुमीयमानत्वात्। तत्त्वज्ञानेन च दग्धबीजभावानां तेषां नाविर्भाव इति स एव पुरुषार्थ इति। ननु दुःखस्य चित्तधर्म्मतयैतादृशी दुःखनिवृत्तिस्तु पुरुषे —कुतस्तत्र तत्त्वज्ञानापेक्षेति चेन्न प्रतिबिम्बरूपेण—पुरुषे यो भोगाख्यो दुःख- तन्निवृत्तेरेवात्र दुःखनिवृत्तिपदेन विवक्षितत्वादिति संक्षेपः। सूत्रघटकद्वितीयात्यन्त-

---

খের নিবৃত্তি ও ভবিষ্যৎ দুঃখের আবির্ভাব না হওয়াই অত্যন্ত শব্দের অর্থ। তাবতা ইহাই বলা হইল যে, দুঃখের দ্বিক্ষণস্থায়িত্বনিবন্ধন বর্ত্তমান দুঃখের স্বতঃ হইতে পারিলেও ভবিষ্যৎ দুঃখের অনাবির্ভাব কখনও কোন কারণ ব্যতিরেকে হইতে পারে না এবং তজ্জন্যই তত্ত্বজ্ঞানাদি সাধনের ) ধর্ম্ম, অর্থ ও কামের পুরুষার্থত্ব থাকিলেও সেই পুরুষার্থত্বে অত্যন্তত্ব অর্থাৎ ধর্ম্ম, অর্থ ও কাম অত্যন্ত পুরুষার্থ নহে, যে হেতু তাহারা ক্ষয়ী ও সুখস্বরূপ। মোক্ষ ক্ষয়ী বা বিষয়জ সুখস্বরূপ নহে, যে হেতু মোক্ষ

भवतु दुःखनिवृत्तिः पुरुषार्थः, तथापि दृष्टादेव सुकरोपायात् तत्सिद्धेः शास्त्रसाध्ये दुष्करोपाये अनेकजन्मपरम्परायाससम्भाव्ये चित्तनिरोधादौ कः स्वस्थात्मा प्रवर्त्तते ? तथा च—

अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् ।
इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत् ॥

तथा हि,—शारीरदुःखनिवृत्तये औषधादयः सन्ति, मानसदुःखनिवृत्तये प्रवरस्त्रीमिष्टान्नादयः सन्ति, आधिभौतिकदुःखनिवृत्तये च नीतिशास्त्रार्थवादिभिः प्रोक्ता नानाप्रकाराः उपायाः सन्ति, आधिदैविकदुःखनिवृत्तये च शान्तिमणिमन्त्रादयः सन्ति, इत्यत उत्तरसूत्रम्—

पदस्य फल कृतः प्रदर्शयति—धर्मार्थेत्यादिना। पुरुषार्थत्वं—अभिलाषविषयत्वं। तथाच धर्मार्थकामानां पुरुषार्थत्व इति भाव., अत्यन्तत्व—परमत्वं, अत्यन्तत्वाभावे हेतुमाह—अधिलादिति पूर्व्वोक्तत्रयाणामिति सम्बन्ध.। साध्यनत्वं वस्तुगत्या कस्यापि विनाशस्याभावादाह—विषय सुखत्वाद्वेति। अत्र वाशब्दश्चार्थे। न तथा—नश्वरत्वं विषयजसुखत्वं चेत्यर्थः। अतैव हेतु माह—नित्यत्वादिति। ननु मोक्षस्यापि तत्त्वज्ञानजन्यत्वात् कथं नित्यत्वमित्याशङ्कायामाह—प्रकाशरूपत्वादिति, तथाच मोक्षो न जन्यते, किन्तु निरुक्तदुःखनिवृत्त्या प्रकाशते "मुक्तिर्हि

নিত্য ও প্রকাশস্বরূপ। অতএবই ত্রিবিধ দুঃখের অত্যন্ত নিবৃত্তিরূপ মোক্ষকে অত্যন্ত পুরুষার্থ বলা হইয়াছে ॥ ১ ॥

দুঃখনিবৃত্তি পুরুষার্থ হউক, তথাপি প্রত্যক্ষ সহজ উপায় হইতেই সেই দুঃখ নিবৃত্তি সিদ্ধ হইতে পারে, সুতরাং অনেক জন্মান্তরী আয়াসসাধ্য শাস্ত্রবোধিত চিত্তনিরোধাদি দুষ্কর কার্য্য কোন সুস্থমনা ব্যক্তি কর্তৃক প্রবর্ত্ত হইবে ? যেমন অর্কবৃক্ষে ( বাড়ীর আকন্দগাছে ) যদি মধু লাভ করিতে পারে, তবে কিজন্য পর্ব্বতে যাইবে ? অভীষ্ট অর্থের সিদ্ধি হইল কোন্ বিদ্বান্ ব্যক্তি যত্ন করে ?" দেখ শারীরিক দুঃখ নিবৃত্তির জন্য ঔষধাদি রহিয়াছে, মানসিক দুঃখ নিবৃত্তির জন্য উৎকৃষ্ট স্ত্রী ও মিষ্টান্নাদি বিদ্যমান আছে, আধিভৌতিক দুঃখ

न दृष्टात्तत्सिद्धिर्निवृत्तेरप्यनुवृत्तिदर्शनात् ॥ २ ॥

न वयं निवृत्तिमात्रं पुरुषार्थं इति ब्रूमः, किन्तु उत्पत्तिनिवृत्तिः औषधादिना च नावश्यं दुःखं निवर्तते, यदि वा कथञ्चिन्निवर्तेत पुनरन्येन न भवितव्यमिति नास्ति नियमः ॥ २ ॥

भवतु दुःनिवृत्तिस्तथापि न तथा पुरुषार्थः, पुनःपुनस्तथाविध-प्रतीकारकरणादित्यत आह—

---

अथाभावं स्वरूपेण व्यवस्थिति'रित्यादिशास्त्रैरात्यन्तिकस्वरूपावस्थानस्यैव मोक्षत्वात्। त्रिविधदुःखनिवृत्तेरात्यन्तिकपुरुषार्थत्वाभिधानमुत्तरत्र मोक्षत्वाभिधानञ्च सहभावितया मोक्षत्व-व्यपदेशिनेति ध्येयम् ॥ १ ॥

द्वितीयसूत्रस्यावतरणिकामाचष्टे—भवत्वित्यादिना। अल्पायासेनेष्टसिद्धिसम्भवे कोऽपि महायासं न करोतीति स्वोक्तमर्थं समर्थयितुं लौकिकाभाणकं प्रमाणयति—अर्के चेदिति। "अर्के" इत्यत्र "अक्के" इति वाचस्पतिमिश्रादिसम्मतः पाठः, अक्के गृहकोणे इति तदर्थः। अतोऽत्तरसूत्रमिति, अत—अस्यां शङ्कायां उत्तराय—प्रतिवचनाय सूत्रं नदृष्टादित्यादि सूत्र-मित्यर्थः।

सूत्रतात्पर्यं विवृणोति—न वयमित्यादिना। निवृत्तिमात्रं—यथाकथञ्चिन्निवृत्तिं। उत्पत्तिनिवृत्तिः—अनागतावस्थदुःखानामनाविर्भाव इत्यर्थः, नास्ति नियम इति, तथाच भावि-दुःखप्रत्यूहैव तादृशदुःखनिवृत्त्या न कृतकृत्यतेति भावः ॥ २ ॥

---

নিবৃত্তির জন্য নীতিশাস্ত্রার্থবাদী কর্তৃক কথিত নানা প্রকার উপায় আছে, আধিদৈবিক দুঃখ নিবৃত্তির জন্য ও শান্তিমণিমন্ত্রাদি উপায় আছে, এই আশঙ্কাতেই উত্তর সূত্র বলিয়াছেন "দৃষ্ট উপায় হইতে সেই ত্রিবিধ দুঃখের অত্যন্ত নিবৃত্তি সিদ্ধ হইতে পারে না, যে হেতু নিবৃত্তি হইলেও পুনরায় দুঃখের আবির্ভাব হইতে দেখা যায়"।

আমরা দুঃখ নিবৃত্তিমাত্রকেই পুরুষার্থ বলি নাই, কিন্তু দুঃখের উৎপত্তি ...ই পুরুষার্থ, ঔষধাদি দ্বারা নিয়তঃই দুঃখনিবৃত্তি হয় না, কথঞ্চিন্নিবর্ত্তিত হইলেও পুনরায় অন্য দুঃখ যে হইবে না, তাহার কোনও নিয়ম নাই ॥ ২ ॥

**प्रात्यहिकक्षुत्प्रतीकारवत् तत्प्रतीकारचेष्टनात् पुरुषार्थत्वम् ॥ ३ ॥**

यथा प्रत्यहं क्षुत्प्रतीकाराय वरान्नभक्षणादिना तृप्तस्य पुरुषार्थता, तथा दुःखनिवृत्तये औषधादिना पुनःपुनःप्रतीकारात् पुरुषार्थतेति ॥३॥

सिद्धान्तमाह—

अभ्युपगमवादेन तृतीयसूत्रमवतारयति—भवत्विति । दुःखनिवृत्तिरिति औषधादिना नियमतो दुःखनिवृत्तिरित्यर्थः । न तथा पुरुषार्थः—नात्यन्तिकपुरुषार्थः । अत्र हेतुमाह—पुनः पुनस्तथाविधप्रतीकारकरणादिति, पुनःपुनस्तत्सजातीयदुःखान्तरनिवृत्ती तदुपायसजातीयोपायान्तरानुष्ठानादित्यर्थः । इति इममेवार्थं, अतः—अतःपरं आह परसूत्रेणेत्यर्थः । सूत्रार्थं विवृणोति—यथेत्यादिना ॥ ३ ॥

चतुर्थसूत्रस्योपष्टम्भं दर्शयति—सिद्धान्तमाहेति । ननु दृष्टोपायसाध्यदुःखनिवृत्तेः पुरुषार्थत्वसद्भावे तथैव कृतकृत्यता स्यादित्याशङ्कायां सिद्धान्तमित्यर्थः ।

দৃষ্ট উপায়দ্বারা দুঃখনিবৃত্তি হয় হউক, তথাপি সেই নিবৃত্তি অত্যন্ত পুরুষার্থ নহে, যে হেতু বার বার সেইরূপ প্রতিকারের চেষ্টা করিতে হয়, এই কথাই অতঃপর সূত্রকার বলিয়াছেন—

"বারবার প্রতীকারের চেষ্টা করিতে হয় বলিয়া প্রাত্যহিক ক্ষুধা প্রতীকারের ন্যায় সেই দুঃখ নিবৃত্তির পুরুষার্থতা," (অর্থাৎ অত্যন্তিক পুরুষার্থতা) নাই।

প্রতিদিন ক্ষুৎপ্রতীকারের জন্য উৎকৃষ্ট অন্ন ভক্ষণাদিদ্বারা পরিতৃপ্ত ব্যক্তির যেরূপ পুরুষার্থতা, দুঃখনিবৃত্তির জন্য ঔষধাদিদ্বারা (বহুচেষ্টা করিয়া) বারবার প্রতীকার লাভ করিয়াও সেইরূপ পুরুষার্থতা ॥ ৩ ॥

सर्वासम्भवात् सम्भवेऽपि सत्तासम्भवाद्धेयः प्रमाण-कुशलैः ॥ ४ ॥

न हि सर्वदेशे सर्वकाले वा वैद्यादयो वसन्ति। सम्भवेऽपि वा न अत्यन्तत्रिविधदुःखनिवृत्तिः स्यात्। अवश्यं हि देहनिबन्धनात् रागादीनां सम्भवः, देही सुखीति न दृष्टमिति। तस्मादेष पुरुषार्थः प्रामाणिकैः हेयः शास्त्रगम्यस्य उपादेयः ॥ ४ ॥

सूत्रघटकसर्व्वासम्भवादित्यत्र सर्व्वत्रासम्भवादिति सप्तमीतत्पुरुषं मनसि कृत्य तदर्थं विवृणोति—न हि सर्व्वदेश इत्यादिना। सम्भवेऽपीति, कदाचित् कस्यचित् भाग्यवशात् सर्व्वत्र सर्व्वदा सर्व्वदृष्टोपायसङ्घटनेऽपीत्यर्थः। नात्यन्तिकेत्यादिकं सत्त्वासम्भवादित्यस्य तात्पर्य्यार्थवर्णनं, तथाच दृष्टोपायैर्दुःखनिवृत्तावपि तन्निवृत्तेः सत्त्वस्य आत्यन्तिकत्वस्य असम्भवादिति सूत्रार्थः फलितः। सत्त्वासम्भवे हेतुं दर्शयति अवश्यं हीत्यादिना। हि यस्मादर्थे। देहनिबन्धनादिति —देहसम्बन्धाभिमानवशादित्यर्थः। रागादिना द्वेषादिपरिग्रहः, तथाच दुःखनिदानीभूत-रागादिसद्भावे पुनर्दुःखोत्पत्तेरवश्यम्भावादात्यन्तिकत्वस्य सर्व्वथैवासम्भव इति भावः। एतदेव विशदयति—देही सुखीति। देहाभिमानी सर्व्वथा सुखीत्यर्थः। उपसंहरति—तस्मादिति। सूत्रीय-हेयपदस्य कर्म्मपदं पूरयति—एष पुरुषार्थ इति, एष पूर्व्वसूत्रोक्तदृष्टोपायजन्यदुःखनिवृत्ति-

দৃষ্টোপায়সাধ্য দুঃখনিবৃত্তির পুরুষার্থতা থাকিলে তদ্দ্বারাই ত চরিতার্থতা হইতে পারে, এই আশঙ্কায় সিদ্ধান্ত বলিতেছেন—

"সর্ব্বত্র দৃষ্টোপায়ের অসম্ভববশতঃ কদাচিৎ সম্ভব হইলেও সেই দুঃখ-নিবৃত্তির সত্ত্বেও (পুনরায় দুঃখোৎপত্তির সম্ভাবনা থাকায় আত্যন্তিকত্বের) অসম্ভববশতঃ প্রামাণিক ব্যক্তিরা তাদৃশ দুঃখনিবৃত্তিকে হেয় অর্থাৎ দুঃখমধ্যেই গণ্য করিয়া থাকেন"।

সকলদেশে বা সকলকালে বৈদ্যাদির সদ্ভাব হয় না, হইলেও তদ্দ্বারা আত্যন্তিক দুঃখ নিবৃত্তি হইতে পারে না, যে হেতু দেহ থাকিলেই অবশ্য রাগদ্বেষাদি

युक्त्यन्तरमाह—

## उत्कर्षादपि मोक्षस्य सर्वोत्कर्षश्रुतेः ॥ ५ ॥

अथवा—दुःखत्रयनिवृत्तेरन्योऽन्यमुत्कर्षो दृष्टः, मोक्षस्य सर्वोत्कृष्टः, नित्यत्वादेकत्वात्सर्वदुःखोच्छेदरूपत्वाच्च ॥ ५ ॥

ननु नास्त्येव तद्दर्शनं यत्र मोक्षो न पुरुषार्थः, नच औषधादिना दुःखनिवृत्तिमात्रं मोक्षः। तस्माद्यस्तव सिद्धान्तः सोऽस्माकं भविष्यति इत्यत आह—

रूपः। प्रामाणिकैरिति प्रमाणकुशलैरित्यस्य विवरणं, हेयः त्याज्यः दुःखपक्षे निक्षेपणीय इति यावत् ॥ ४ ॥

युक्त्यन्तरमिति, दृष्टोपायजन्यनिरुक्तदुःखनिवृत्तेर्मोक्षापेक्षया हेयत्वे इत्यादिः।

सूत्रतात्पर्यं विवृणोति—अथवेत्यादिना। तथाच "न च पुनरावर्त्तते" (छान्दोग्य ८ अ, १५ ख, १ मन्त्रः) इत्यादि सर्व्वोत्कर्षश्रुतेर्मोक्षस्य उत्कर्षादपि पुरुषार्थान्तरापेक्षया उत्कृष्टत्वादपि मोक्षापेक्षया निरुक्तदुःखनिवृत्तिरूपपुरुषार्थस्य हेयत्वमिति सूत्रार्थः फलितः ॥ ५ ॥

থাকিবে, ( রাগদ্বেষাদি থাকিলে দুঃখও অবশ্যম্ভাবী ) ; দেহী যে সর্ব্বদা সুখী এরূপ দৃষ্ট হয় না। অতএব প্রামাণিক ব্যক্তিগণ এইরূপ পুরুষার্থকে পরিত্যাগ ও শাস্ত্রগম্য পুরুষার্থকে গ্রহণ করিয়া থাকেন ॥ ৪ ॥

দৃষ্টোপায়জন্য দুঃখনিবৃত্তিরূপ পুরুষার্থ যে মোক্ষ অপেক্ষায় হেয়, তদ্বিষয়ে যুক্ত্যন্তর বলিতেছেন—

"সর্ব্বোৎকর্ষশ্রুতিনিবন্ধন মোক্ষের উৎকর্ষ বশতঃ ও ( মোক্ষ অপেক্ষা উক্ত পুরুষার্থ হেয় )।"

দুঃখত্রয় নিবৃত্তির পরস্পর উৎকর্ষ পরিলক্ষিত হয়, তন্মধ্যে নিত্যত্ব, একত্ব ও দুঃখোচ্ছেদস্বরূপত্বনিবন্ধন মোক্ষই সমস্ত দুঃখনিবৃত্তি অপেক্ষা উৎকৃষ্ট। ( "সুতরাং অন্য সমস্ত দুঃখ নিবৃত্তি অপেক্ষা হেয় ) ॥ ৫ ॥

**अविशेषश्चोभयोः ॥ ६ ॥**

**स्वपक्षसिद्ध्या परपक्ष उपालभ्यते, न त्वन्यथा। उक्तञ्च—**

**यत्रोभयोः समो दोषः परिहारोऽपि तादृशः।**

**नैकः पर्य्यनुयोक्तव्यस्तादृगर्थविचारणे ॥ ६ ॥**

**किं स्वभावतो बद्धस्य मोक्षसाधनोपदेशोऽन्यथा वा इत्यत्राह**

दृष्टोपायसाध्याया दुःखनिवृत्तेः परमपुरुषार्थत्वं निराकृत्य तन्निराकरणस्य सर्व्वदार्शनिकाना-मेव समानत्वं व्यवस्थापयितुं षष्ठसूत्रस्योपष्टम्भमाचष्टे—नन्वित्यादिना। न चौषधादिना दुःखनिवृत्तिमात्रं मोक्ष इति, कस्यापि सम्मत इति शेषः। तस्मात् मोक्षस्य पुरुषार्थत्वादीनां सर्व्वमत एव समानत्वात् तव पूर्व्वपक्षकारिणो दार्शनिकस्य, अस्माकं सांख्यमतावलम्बिनां। इति इममर्थं, अतः—अतःपरं आह परसूत्रेणेत्यर्थः। "उभयोः सांख्यतदितरदार्शनिकयोः अविशेषः मोक्षपुरुषार्थतादिसिद्धान्ते विशेषाभावः तुल्यतेति यावदिति सूत्रार्थः। तथाच नास्ति कस्यापि प्रश्नावसर इति भावः। ननु स्वमते यथा तथास्तु, तथापि भवान् पृच्छ्यते इति यदि कश्चिद्-ब्रूयात्तं प्रत्याह—स्वपक्षेत्यादि। नत्वन्यथा स्वपक्षसिद्धिं विना। अत्र प्राचीनसंवादं दर्शयति—यत्रेति, यत्र यादृगर्थविचारणे, उभयोः वादिप्रतिवादिनोः, परिहारोऽपि दोषनिराकरणमपि, तादृशः समः। एकः तयोरन्यतरः, पर्य्यनुयोक्तव्यः—प्रष्टव्यः ॥ ६ ॥

এমন কোন দর্শনই নাই, যাহাতে মোক্ষ পুরুষার্থ নহে, ঔষধাদি দ্বারা দুঃখ-নিবৃত্তিমাত্রকেও কেহই মোক্ষ বলিয়া স্বীকার করেন না, সুতরাং মোক্ষ বিষয়ে পূর্ব্বপক্ষবাদীদের যেরূপ সিদ্ধান্ত সাংখ্যমতাবলম্বীদেরও সেরূপই সিদ্ধান্ত হইবে, এই কথাই অতঃপর বলিতেছেন—

"মোক্ষসিদ্ধান্ত বিষয়ে উভয়ের অর্থাৎ সাংখ্য ও তদিতর দার্শনিকদের কোনই বিশেষ নাই" (অর্থাৎ এবিষয়ে সকলকেই একরূপ সিদ্ধান্তে উপনীত হইতে হইবে বলিয়া কেহই কাহাকে প্রশ্ন করিতে পারেন না)।

নিজের পক্ষ সমর্থন করিতে পারিলেই পরকে দোষ দেওয়া যায়, নিজের

## न स्वभावतो बद्धस्य मोक्षसाधनोपदेशविधिः ॥ ७ ॥

स्वभावनाशात् स्वरूपनाशप्रसङ्गात् । उक्तञ्च—

वस्तुस्थित्या न बन्धोऽस्ति तदभावान्न मुक्तता ।

विकल्पघटितावेतावुभावपि न किञ्चन ॥ ७ ॥

एतदेव द्रढयति—

सप्तमसूत्रावतारणार्थं शङ्कते—किमित्यादिना । स्वभावतो बद्धस्य स्वाभाविकबन्धयुक्तस्य, अन्यथा वा स्वाभाविकबन्धरहितस्य वा, मोक्षाय साधनोपदेशः मोक्षसाधनोपदेशः, इत्यत्र—इति शङ्कायां ।

नेति । स्वभावतो बद्धस्य मोक्षसाधनोपदेशेन विधिः अनुष्ठानं न, नियोज्याभावा घटत इति शेषः ।

कस्मादित्याकाङ्क्षायां वृत्तिकारो हेतुं पूरयति—स्वभावनाशात् स्वरूपनाशप्रसङ्गादिति । स्वाभाविकस्य काल्पनिकत्वमेव सूचितं भवति, तत्र प्राचीनसंवादं दर्शयितुं वृत्तिकृदाह—उक्त-

পক্ষ সমর্থন করিতে না পারিলে পরকেও দোষ দেওয়া যায় না। প্রাচীনেরাও বলিয়াছেন—

"যাদৃশ বিষয়ের বিচারে উভয় পক্ষেরই সমান দোষ ও সমান মীমাংসা, তাদৃশ বিষয়ের বিচারে কেবল এক পক্ষই প্রশ্নের বিষয় (অর্থাৎ প্রশ্নের জন্য দায়ী) হইতে পারে না" ॥ ৬ ॥

স্বাভাবিক বন্ধযুক্ত পুরুষের জন্য কি স্বাভাবিক বন্ধরহিত পুরুষের জন্য মোক্ষ সাধনের উপদেশ প্রদত্ত হইয়াছে? এই আশঙ্কায় বলিতেছেন—

"স্বাভাবিক বন্ধযুক্ত পুরুষের জন্য মোক্ষসাধনের উপদেশবিধি সম্ভবপর হইতে পারে না।"

যেহেতু স্বভাবনাশে বস্তুর স্বরূপনাশের আপত্তি উপস্থিত হয়। ইহার তাৎপর্য্য এই যে, স্বভাব যাবদ্দ্রব্যভাবি, অর্থাৎ যে পর্য্যন্ত বস্তুর সত্তা থাকে, সে পর্য্যন্ত স্বভাবও নিয়তঃই থাকে, স্বভাববিচ্যুত বস্তু কখনও পরিদৃষ্ট হয় না, যেমন

स्वभावस्यानपायित्वादननुष्ठानलक्षणमप्रामाण्यम् ॥ ८ ॥

नित्यस्वभावस्य बन्धस्या[illegible]...नाशार्थमनुष्ठानमशक्यमिति ॥८॥

कश्चिद्विप्रलम्भाय अशक्यमपि उपदिशेत्, यथा अङ्गुल्यग्रे करि-यूथशतमिति, अत आह—

इति। वस्तुस्थित्या वस्तुगत्या, स्वाभाविक इति यावत्। तदभावात् स्वाभाविकबन्धाभावात् मुक्तता मुक्तिः न, साधनीयेति शेषः। स्वतःसिद्धमुक्ततायां साधनापेक्षाविरहादिति भावः। तर्हि किं स्वरूपौ बन्धमोक्षावित्याकाङ्क्षायामाह—विकल्पघटिताविति। उभौ बन्धमोक्षौ विकल्प-घटितौ काल्पनिकौ, न किञ्चन न वास्तवावित्यर्थः ॥ ७ ॥

एतदेवेति, पूर्व्वसूत्रप्रतिपादितं स्वाभाविकबन्धविमुक्ताय शास्त्रविहितानुष्ठानाघटनमेवेत्यर्थः।

सूत्रतात्पर्य्यं वर्णयति—नित्येत्यादिना। अपचायादिति अनपायित्वादित्यस्य विवरणं अविनाशित्वादिति तदर्थः। तन्नाशार्थं—बन्धनाशार्थं, अनुष्ठानं—मोक्षशास्त्रबोधितशम-दमाद्यनुष्ठानं, अशक्यं—अकरणीयं इष्टसाधनत्वाभावनिश्चयादिति भावः। सूत्रे अननुष्ठानलक्षण-मिति, अननुष्ठानं लक्षणं स्वरूपं यस्य तादृशं अप्रामाण्यं, मोक्षशास्त्रस्य स्यादिति शेषः ॥ ८ ॥

मोक्षसाधनोपदेशशास्त्रं केनचित् प्रतारकेण कृतमिति वदतो मतस्य निरासकं सूत्रमव-तारयितुमाह—कश्चिदित्यादि। विप्रलम्भाय—प्रतारणाय।

উষ্ণত্ব বহ্নির স্বভাব, সেই উষ্ণত্ববিহীন বহ্নি কেহ কখনও দেখিয়াছেন কি? সুতরাং স্বাভাবিক বন্ধ অপগমের জন্য কখনও শাস্ত্রানুষ্ঠান হইতে পারে না। এবিষয়ে প্রাচীনেরাও বলিয়াছেন—

বস্তুতঃ পুরুষের বন্ধ নাই, বন্ধ না থাকিলে স্বতঃসিদ্ধত্বনিবন্ধনও সাধনা-পেক্ষ হইতে পারে না; সুতরাং এই বন্ধ ও মুক্তি উভয়ই কাল্পনিক, ইহার কোনটিই যথার্থ নহে ॥ ৭ ॥

এ বিষয়ই আরও দৃঢ় করিতেছেন—

"নিত্যের স্বভাবের অবিনাশিত্বনিবন্ধন (তাহার বিনাশের জন্য বিহিত হইলে) মোক্ষশাস্ত্রের অননুষ্ঠানরূপ অপ্রামাণ্য হইতে পারে।"

नाशक्योपदेशविधिरुपदिष्टेऽप्यनुपदेशः ॥ ९ ॥

अशक्यकार्य्याय उपदेशः न सम्भवति। उपदिष्टेऽपि न उपदेशः, निष्फलीभवति इत्यर्थः ॥ ९ ॥

अत्र शङ्कते—

शुक्लपटवद्बीजवच्चेत् ॥ १० ॥

स्वभावस्यापि नाशो दृश्यते, यथा पटे शुक्लत्वस्य रागादिभिः, बीजस्य वा अग्न्युत्तापात् अङ्कुरजननशक्तेः ॥ १० ॥

सूत्रतात्पर्य्यं विवृणोति—अशक्येत्यादिना। उपदिष्टेऽपि—प्रतारकादिभिर्व्विहितेऽपि, अशक्यानामुपाये इति शेषः। न उपदेश इति अनुपदेश इत्यस्य विवरणं तस्य च स उपदेश इत्यादिः। निष्फलीभवतीति च न उपदेश इत्यस्य विवरणम्। तथाच उपदिष्टेऽपि स उपदेशः निष्फलीभवतीति सूत्रार्थः फलितः ॥ ९ ॥

पूर्व्वपक्षसूत्रमवतारयितुमाह—अत्र शङ्कत इति।

सूत्रतात्पर्य्यं विवृणोति—स्वभावस्येत्यादिना। अङ्कुरजननशक्तेरिति—नाश इति शेषः। तथाचैवं स्वाभाविकस्य बन्धस्यापि नाशः सम्भवत्येवेति तन्नाशनोपदेशः स्यादिति पूर्व्वपक्षाशयः ॥१०॥

নিত্যের স্বভাববন্ধের অবিনাশিত্বনিবন্ধন তাহার বিনাশের জন্য মোক্ষ শাস্ত্রার্থের অনুষ্ঠান কোনরূপেই সম্ভবপর হইতে পারে না ॥ ৮ ॥

কেহ প্রতারণা করিবার জন্য অশক্য কার্য্যেরও উপদেশ দিয়া থাকেন, যেমন (কেহ বলেন) অঙ্গুলির অগ্রভাগে শত হস্তীর যূথ আছে, বস্তুতঃ এটি প্রতারণাবাক্য, যে হেতু অঙ্গুলির অগ্রভাগে একটি হস্তি থাকাও সম্ভবপর হইতে পারে না, সেইরূপ এই মোক্ষশাস্ত্রও কোন প্রতারক ব্যক্তিই লিখিয়া থাকিবেন, এই আশঙ্কায় বলিতেছেন—

অশক্য কার্য্যের জন্য উপদেশ সম্ভবপর নহে, প্রতারক ব্যক্তিরা উপদেশ দিলেও সেই উপদেশ উপদেশ নহে, অর্থাৎ নিষ্ফল হয় ॥ ৯ ॥

सिद्धान्तमाह—

शक्त्युद्भवाभ्यां नाशक्योपदेशः ॥ ११ ॥

सत्कार्य्यसिद्धेर्न पटस्य शौक्ल्यं नष्टं, किन्तु रागादिना अभिभूतं,

सिद्धान्तसूत्रमवतारयति—सिद्धान्तमाहेति। सूत्रमर्थं विवृणोति—सत्कार्य्यसिद्धे-रित्यादिना। सत्कार्य्यसिद्धेः नासदुत्पद्यते न च सद्विनश्यतीति सिद्धान्तस्य युक्तिप्रमाण-सिद्धत्वात्। अभिभूतं तिरोभूतं, उद्भूतं आविर्भूतं। अङ्कुराजननादपीति दग्धबीजेनेत्यादिना बीजं न नष्टमित्यत्र बीजपदं बीजगताङ्कुरजननशक्तिपरं। ननु दग्धबीजस्याङ्कुर-जननशक्तेर्यदि न नाशस्तर्हि क्षालनेन शुक्लत्वस्येव तस्या अपि कदाचिदाविर्भावः स्यादित्याशङ्काया-माह—तस्य चेत्यादि। न दृश्यते इत्यत्र हेतुमाह—वस्तुवैचित्र्यादिति। नहि सर्व्वैर्वस्तुभिरेक-रूपैर्भवितव्यमित्यस्ति नियम इति भावः। अत्रासन्तुष्टः प्रत्याचष्टे—अथवेति। तथाच उक्तदृष्टान्तद्वयोरपि नाशकस्य स्वाभाविकस्य, उपदेशः सम्भवतीति शेषः, कुतः शक्त्युद्भवानुद्भवाभ्यां उक्तदृष्टान्तद्वयेऽपि शक्तेः शुक्लत्वादेराविर्भावतिरोभावाभ्यां। न

এস্থলে আশঙ্কা করিতেছেন—স্বভাবেরওত নাশ দেখা যায়, যেমন কুঙ্কুমাদি-দ্বারা বস্ত্রের শুক্লত্বের নাশ হয়, এবং অগ্নির উত্তাপ হইতে বীজের অঙ্কুর জনন-শক্তির নাশ হয়; সুতরাং বন্ধরূপ স্বভাবেরওত নাশ হইতে পারে এবং তজ্জন্য শাস্ত্রোপদেশও সার্থক হইতে পারে ॥ ১০ ॥

পূর্ব্বসূত্রীয় আশঙ্কার সিদ্ধান্ত বলিতেছেন—

"উক্ত দৃষ্টান্তদ্বয় হইতেও স্বাভাবিকের বিনাশোপদেশ সম্ভবপর নহে, যে হেতু উক্ত স্থানেও শুক্লত্বাদি শক্তির আবির্ভাব এবং তিরোভাবই হইয়াছে, কিন্তু বিনাশ হয় নাই।"

সৎকার্য্যবাদের যুক্তি প্রমাণসিদ্ধত্বনিবন্ধন পরে শুক্লত্ব বিনষ্ট হয় না, কিন্তু রক্তিমাদিদ্বারা তিরোভূত হইয়া থাকে, আর সংযোগাদিদ্বারা ধৌত করিলে পুনরায় আবির্ভূত হয়। দগ্ধবীজে অঙ্কুর জন্মায় না বলিয়া তাহার অঙ্কুরোৎ-পাদন শক্তিরও বিনাশ হয় না, কিন্তু তিরোভাব হয়, পরন্তু বস্তুর চিত্রিতাবশতঃ

व्याजनात् पुनरङ्कुरनम्। अङ्कुराजननादपि बीजं न नष्टं, किन्त्वभिभूतं, तस्य च पुनरुद्भवो न दृश्यते वस्तुवैचित्र्यात्, अथवा योगिसङ्कल्पादिभिः तच्छक्त्याविर्भावात् ॥ ११ ॥

नन्वात्मा स्वभावतो न बद्धः, किन्तु कालवशाद्बद्धो भविष्यतीत्यत आह—

**न कालयोगतो व्यापिनो नित्यस्य सर्वसम्बन्धात् ॥ १२ ॥**

भवतु अयं, यदि तस्य कदापि कालयोगः स्यात् न स्याद्वा।

---

दृष्टान्त एव विनाशो न भवतीति कुतो दार्ष्टान्तिके तत्सम्भव इति भावः इति सूत्रार्थः फलितः ॥ ११ ॥

एवं बन्धस्य स्वाभाविकत्वं निराकृत्य नैमित्तिकत्वमपि निराकरिष्यति—सूत्रजातेन। तत्र कालयोगरूपनिमित्तजन्यत्वनिराकरणसूत्रमवतारयितुमाह—नन्वित्यादि।

सूत्रतात्पर्य्यं विवृणोति—भवत्वित्यादिना। अयं—कालयोगतो बन्धः, तस्य—पुरुषस्य। सर्व्वकालसम्बन्धोपाधित्वादिति, तथा च नित्यसंयोगस्य बन्धकारणत्वे अनिर्मोक्षः स्यादिति भावः। परसूत्र एव प्रयोजनीयस्य "व्यापिन" इति पदस्येह सम्पातायातत्वं दर्शयति—नित्यस्ये-त्यादिना। सूत्रे न कालयोगत इत्यनन्तरं "बन्ध" इति पूरणीयं, एवमुत्तरत्रापि। अत्र च

---

বশতঃ তাহার পুনরায় আবির্ভাব দেখা যায় না। অথবা যোগিসঙ্কল্পাদি দ্বারা কদাচিৎ সেই শক্তির পুনরায় আবির্ভাবও হইয়া থাকে ॥ ১১ ॥

আত্মা স্বভাবতঃ বদ্ধ নহে, কিন্তু কালসংযোগবশতঃ বদ্ধ হয়, এই প্রশ্নে বলিতেছেন—

"কালসংযোগবশতঃ পুরুষের বন্ধ হইতে পারে না; যেহেতু নিত্য ও ব্যাপী কালের সম্বন্ধ সর্ব্বদাই বর্ত্তমান আছে।"

কালসংযোগবশতঃ বন্ধ তবেই হইতে পারে, যদি পুরুষের কালসংযোগ কদাচিৎ হয় ও কদাচিৎ না হয়, কিন্তু তাহা নহে; যেহেতু নিত্য ও ব্যাপী আত্মার সর্ব্বকালেই সমান সম্বন্ধ আছে। সুতরাং সেই সংযোগকে বন্ধের

नित्यस्य व्यापिनः सर्वकालसम्बन्धोपाधित्वात् । नित्यस्येत्यनेन सर्व-कालसम्बन्धे प्राप्ते । "व्यापिन" इत्युत्तरसूत्रपर्य्यालोचनया समन्वयायातम् ॥ १२ ॥

देशवशाद्बन्धो भविष्यतीत्यत आह—

न देशयोगतोऽप्यस्मात् ॥ १३ ॥

व्यापिनो नित्यस्य सर्वदेशसम्बन्धादिति ॥ १३ ॥

अथावस्थातो बन्धो भविष्यतीत्यत आह—

नावस्थातो देहधर्मत्वात्तस्याः ॥ १४ ॥

---

प्रकरणे श्रुतिस्मृतियुक्तिसिद्धं कालादीनां सामान्यतो निमित्तत्वं नापलप्यते, किन्तु विशिष्टं जनकत्वमेवेति सुनिपुणं विभावनीयम् ॥ १२ ॥

सूत्रान्तरमवतारयति—देशवशादिति । सूत्रीय"तस्मा"दिति पदं व्याचष्टे—व्यापिन इत्यादिना । नित्यस्याप्यविभुनः सर्व्वदेशसम्बन्धासम्भवाद्व्यापिन इति, व्यापिनोऽप्यनित्यस्य भूत-भविष्यद्देशासम्बन्धित्वान्नित्यस्येति च पूर्व्वसूत्रादानीय इह योजितमिति मन्तव्यम् । तथा च देशयोगस्य बन्धहेतुत्वेऽपि पूर्व्ववदनिर्म्मोक्षप्रसङ्ग एव दोष इति ॥ १३ ॥

सूत्रान्तरमवतारयितुमाह—अथेत्यादि । सूत्रघटकं पदं व्याचष्टे—तस्या इत्यादिना ।

---

কারণ বলিলে কখনও পুরুষের মুক্তি হইতে পারে না। "নিত্যস্য" এই বিশেষণদ্বারাই আত্মার সর্ব্বকাল-সম্বন্ধ প্রাপ্ত হইয়াছে; সুতরাং "ব্যাপিনঃ" এই বিশেষণটির এই সূত্রে কোনই প্রয়োজনীয়তা নাই; কিন্তু পরসূত্রে প্রয়োজনীয়তা আছে; অতএব পরসূত্র পর্য্যালোচনা-প্রসঙ্গই এই সূত্রে আসিয়া পড়িয়াছে ॥ ১২ ॥

দেশযোগবশতঃ বদ্ধ হইবে এই আশঙ্কায় বলিতেছেন—

"দেশযোগবশতঃও বদ্ধ হইতে পারে না; যেহেতু ব্যাপী ও নিত্য আত্মার সর্ব্ব দেশেই সম্বন্ধ আছে।" (সুতরাং দেশসংযোগকে বন্ধের কারণ বলিলেও সর্ব্বদাই দেশসংযোগরূপ বন্ধের কারণ থাকায় কখনও পুরুষের মুক্তি হইতে পারে না, ইহাই দোষ) ॥ ১৩ ॥

অবস্থা হইতে পুরুষ বদ্ধ হইবে এই প্রশ্নে বলিতেছেন—

तस्या: अवस्थाया:। देहधर्मत्वादित्युपलक्षणं, अपरिणामित्वादिति परमार्थ: ॥ १४ ॥

आत्मनोऽप्यवस्था भविष्यतीत्यत आह—

**असङ्गोऽयं पुरुष इति ॥ १५ ॥**

"असङ्गो ह्ययं पुरुष" इति श्रुतिरस्ति, सा बाधिता स्यात् ॥ १५ ॥

---

इह अवस्था च बाल्ययौवनादिरूपपरिणाम:। कार्य्यकारणयो: सामानाधिकरण्यनियमात् देहधर्म: पुरुषीयबन्धहेतुर्भवितुं नार्हतीति सूत्राशय:। ननु अन्यधर्म्मोऽपि अन्यदीयकार्य्यहेतुर्भवत्येव, यथा कारणगुणा: कार्य्यगुणहेतुरित्याशङ्कायां हेत्वन्तरं पूरयितुमाह—इहेत्यादि। उपलक्षणीयं हेतुं दर्शयति—अपरिणामित्वादिति। पुरुषस्येत्यर्थ:, तथा च पुरुषस्य बन्धो यदि अवस्थारूपपरिणामजन्य: स्यात्तदा कार्य्यकारणयोरभेदेन तस्यापि परिणामरूपत्वात् परिणामाभावरूपमपरिणामित्वं पुरुषस्य न स्यादिति भाव: ॥ १४ ॥

पुरुषस्यावस्थावत्त्वे बाधप्रदर्शकं सूत्रमवतारयितुमाह—आत्मन इति। सूत्रे इति शब्दो हेत्वर्थे। तथा च अयं पुरुष: असङ्ग इति हेतो: अवस्थाया न पुरुषधर्म्मत्वमिति सूत्रार्थ: फलित:।

पुरुषस्यासङ्गत्वे बृहदारण्यकोपनिषदश्चतुर्थाध्यायतृतीयब्राह्मणस्य पञ्चदशमन्त्रात्मिकां श्रुतिं प्रमाणयति—असङ्ग इति। ननु पुरुषस्यासङ्गत्वेऽपि अवस्थायास्तद्धर्म्मत्वे को दोष इत्याशङ्काया-

"অবস্থার দেহধর্ম্মত্বনিবন্ধন অবস্থা হইতে পুরুষের বন্ধ হইতে পারে না।" (ইহার অভিপ্রায় এই যে, কারণ কার্য্যের অধিকরণে থাকিয়াই কার্য্য জন্মাইয়া থাকে, সুতরাং দেহের ধর্ম্ম-অবস্থা বন্ধরূপ কার্য্যের অধিকরণ আত্মাতে না থাকায় কখনও আত্মার বন্ধ জন্মাইতে পারে না)।

এই সূত্রে "দেহধর্ম্মত্বাৎ" এইটি উপলক্ষণ; পুরুষের অপরিণামিত্বনিবন্ধন অবস্থা হইতে বন্ধ হইতে পারে না, ইহাই বাস্তবিক অর্থ ॥ ১৪ ॥

অবস্থা আত্মারই ধর্ম্ম হউক এই প্রশ্নে বলিতেছেন—

"যে হেতু পুরুষ অসঙ্গ (অন্য ধর্ম্মের অনাশ্রয়), অতএব অবস্থা আত্মার ধর্ম্ম হইতে পারে না।"

অবস্থা আত্মার ধর্ম্ম হইলে "অসঙ্গো হ্যয়ং পুরুষঃ" এই যে বৃহদারণ্যক শ্রুতি আছে, তাহা বাধিত হয়। ইহার অভিপ্রায় এই যে, শ্রুতিতে আছে,

कर्मवशाद्बन्धो भविष्यतीतिमतं दूषयति—

**न कर्मणान्यधर्मत्वादतिप्रसक्तेश्च ॥ १६ ॥**

निर्गुणत्वादात्मनः कर्मणोऽनात्मधर्मत्वम्। ननु अन्यधर्मेणापि कर्मणा बन्धो भविष्यति। तदयुक्तं, नहि अन्यधर्मेण अन्यत्र किञ्चि-

---

माह—सा बाधिता स्यादिति। अयमर्थः—असङ्गत्वस्यात न सम्बन्धसामान्याभाववत्त्वं कालदेश-सम्बन्धेन पूर्व्वोक्तेन सह विरोधात् परन्तु अन्यधर्म्मानाश्रयत्वमेव, एवञ्च पुरुषस्यावस्थाङ्गीकारे तस्य अन्यधर्म्माश्रयत्वरूपसङ्गप्रसक्त्या। असङ्गत्वश्रुतेर्ब्बाधो दुष्परिहर एवेति। तथाच श्रुतिविरोधादेव नावस्थायाः पुरुषधर्म्मत्वमिति भावः ॥ १५ ॥

सूत्रान्तरमवतारयति—कर्म्मवशादिति। सूत्रे कर्म्मणेति कर्म्मजन्यादृष्टेनेत्यर्थः, अचिर-विध्वंसिनः कर्म्मणः अदृष्टद्वारकत्वं विना फलजनकत्वशङ्काया अप्यनुपयुक्तत्वात्। अतएव वृत्तौ कर्म्मणोऽनात्मधर्म्मत्वं प्रति निर्गुणत्वादिति हेतूपन्यासोऽपि यथायथं सङ्गच्छते। नेति, पुरुषस्य बन्ध इति शेषः। अन्यधर्म्मत्वात्—बुद्धिधर्म्मत्वात्।

अतिप्रसक्तेश्चेति हेत्वन्तराभिधानस्य प्रयोजनं दर्शयितुं शङ्कते—नन्विति। स्फुटतर-दोषस्यानभिधानेन सूत्रकारस्य न्यूनत्वं मन्यमानो वृत्तिकारः पूरयति—विश्वस्य वैचित्र्यानु-

---

পুরুষ অসঙ্গ (অন্য ধর্ম্মের অনাশ্রয়) ; যদি পুরুষে অবস্থারূপ অন্য ধর্ম্মের আশ্রয়ত্ব স্বীকার করা যায়, তবে পুরুষের অন্য ধর্ম্মের অনাশ্রয়ত্বরূপ অসঙ্গত্ব থাকে না ; বলিয়াই শ্রুত্যর্থ বাধিত হয় ; সুতরাং শ্রুত্যর্থের অনুরোধেই অবস্থা পুরুষের ধর্ম্ম হইতে পারে না ॥ ১৫ ॥

"কর্ম্মবশতঃ পুরুষ বদ্ধ হইবে" এই মতকে দূষিতেছেন—

"বিহিত নিষিদ্ধ কর্ম্মদ্বারাও পুরুষের বন্ধ হইতে পারে না ; যেহেতু কর্ম্ম অন্যের ( বুদ্ধির ) ধর্ম্ম ; একের ধর্ম্মে অন্যের বন্ধন স্বীকার করিলে মুক্ত আত্মার বন্ধাপত্তিরূপ অতিব্যাপ্তি দোষও হইতে পারে।"

আত্মার নির্গুণত্বনিবন্ধন কর্ম্ম ( কর্ম্মজন্য অদৃষ্ট ) আত্মার ধর্ম্ম নহে। কর্ম্ম অন্যের ধর্ম্ম হইলেও তদ্দ্বারা বদ্ধ হয়, একথাও অযুক্ত ; যেহেতু অন্যের ধর্ম্মদ্বারা অন্যত্র কিছুই আহিত হয় না। কারণ তাহা হইলে বিশ্বের বিচিত্রতার অনুপপত্তি হয়। ইহার অভিপ্রায় এই যে, কারণের বিচিত্রতাই কার্য্যের বিচিত্রতার সম্পাদক। অন্য ধর্ম্মদ্বারা যদি অন্যত্র কার্য্য হয়, তবে

दाघीयति, विश्वस्य वैचित्र्यानुपपत्तेः, अतिप्रसक्तेश्चेति । मुक्तात्मनामपि बन्धप्रसङ्गोऽन्यत्वाविशेषादिति ॥ १६ ॥

दूषणान्तरमाह—

विचित्रभोगानुपपत्तिरन्यधर्मत्वे ॥ १७ ॥

दृश्यते केचित् सुखिनः केचित् दुःखिनः । न चानादौ संसारे केनापि सुखहेतु कर्म दुःखहेतु कर्म वा न कृतं, अन्यधर्मेण अन्यत्र कार्य्यजनने सर्वे सुखिनो दुःखिनो वा स्युः ॥ १७ ॥

---

पपत्तेरिति । तथाहि—अन्यधर्म्मेणापि यद्यन्यत्र कार्य्यमुत्पाद्यते, तदान्यत्वाविशेषेण सर्व्वत्रैव सर्व्वकारणसमवधानप्रसङ्गात् कुत्रापि न्यूनाधिक्यादिरूपकारणवैचित्र्यं न स्यात्, तदभावे च कार्य्यवैचित्र्यं न घटते, कारणवैचित्र्यनियम्यत्वात् कार्य्यवैचित्र्यस्येति स्फुटतरोऽभिप्रायः । अतिप्रसक्तिं विशदयति—मुक्तात्मनामपीत्यादिना ॥ १६ ॥

दूषणान्तरमिति, अन्यधर्म्मेणान्यत्र कार्य्यजनने इत्यर्थः । सूत्रे अन्यधर्म्मत्व इति कारणत्व-सामानाधिकरण्याङ्गीकार इति शेषः । अथवा अन्यस्मिन् धर्म्मत्वं हेतुत्वं यस्येति व्युत्पत्त्या अन्यधर्म्म एवान्यधर्म्मत्वशब्दस्यार्थः, एवञ्च अन्यदीयकार्य्यजनकत्वस्याङ्गीकार इति शेषः ।

सूत्रतात्पर्य्यं वर्णयति—दृश्यन्त इत्यादिना । न चेति न कृतमित्यन्वयः, तथा च तत्र्ययस्य

সর্ব্বত্রই সমস্ত কারণের সমাধান হওয়ায় ন্যূনাধিক্যাদিরূপ কারণের বিচিত্রতা কোথাও রক্ষিত হয় না ; সুতরাং বিশ্বের বৈচিত্র্যও হইতে পারে না। সূত্রের "অতিপ্রসক্তেশ্চ" ইহার তাৎপর্য্য এই যে, অন্যের কর্ম্মদ্বারা যদি অন্যের বন্ধন হয়, তবে অন্যত্বের কোনও বিশেষ না থাকায় (অর্থাৎ বুদ্ধি অপেক্ষায় অমুক্ত আত্মাতে যেরূপ অন্যত্ব আছে, মুক্ত আত্মাতেও সেইরূপ অন্যত্ব থাকায়) মুক্তাত্মারও বন্ধপ্রসঙ্গ অনিবার্য্য ॥ ১৬ ॥

অন্য ধর্ম্মদ্বারা অন্যত্র কার্য্যোৎপত্তি স্বীকারে দোষান্তর বলিতেছেন—

"অন্য ধর্ম্মে অন্যদীয় কার্য্যের জনকত্ব স্বীকার করিলে বিচিত্র ভোগের অনুপপত্তি হয়।"

জগতে দেখা যায়, কোন কোন লোক সুখী ও কোন কোন লোক দুঃখী। অনাদি সংসারে এমন কেহই নাই যে, যে সুখের হেতু বা দুঃখের হেতু কর্ম্ম না

अन्यधर्म्मेण अन्यत्र कार्य्यजनने प्रकृतिर्नियामिका भविष्यति. यं पुरुषं प्रति सा प्रवर्त्तते तस्य बन्धो भविष्यतीत्यत आह—

**प्रकृतिनिबन्धना चेन्न तस्या अपि पारतन्त्र्यम् ॥ १८ ॥**

प्रकृतेरपि व्यापित्वात् सर्वपुरुषसम्बन्धाविशेषात्कर्म्मणा विना न नियम इति तस्या अपि कर्मपारतन्त्र्यात्। तत्र च उक्तो दोषः ॥ १८ ॥

---

प्रकृतार्थगमकतया सुखहेतु कर्म्म दुःखहेतु कर्म्म च कृतमेवेति फलितं एतेन अन्यधर्म्मेणान्यत्र कार्य्यजननमुखदुःखोभयभोगहेतुसद्भावो दर्शितः। सर्व्वे सुखिनो दुःखिनो वा स्युरिति, सर्व्वत्र तुल्यकारणसद्भावप्रसङ्गादिति भावः। तथा च विचित्रभोगानुपपत्तिरिति सूत्रोक्तमेव फलितमिति मन्तव्यम् ॥ १७ ॥

प्रकृतेर्नियामकत्वमङ्गीकृत्योक्तदोषं निरस्यतो मतं दूषयितुमुपन्यस्य सूत्रान्तरमवतारयति—अन्यधर्म्मेति।

सूत्रे प्रकृतिनिबन्धना—प्रकृतिनिमित्तिका, बन्धना भवत्विति शेषः। प्रकृतिनिबन्धनादिति पाठे प्रकृतिरूपकारणबन्धादित्यर्थः। दूषयति—नेति, तत्र हेतुमाह—तस्या इति। यत इत्यादि।

केवलायाः प्रकृतेर्बन्धहेतुत्वे दोषं प्रकाशयन् तस्याः पारवश्यमेव विवृणोति—प्रकृतेरपीत्या-

---

করিয়াছে; সুতরাং অন্য ধর্ম্মদ্বারা অন্যত্র কার্য্যোৎপত্তি স্বীকার করিলে সকলেই সুখী বা সকলেই দুঃখী হইতে পারে। ইহার তাৎপর্য্য এই যে, অন্য ধর্ম্মদ্বারা অন্যত্র কার্য্যোৎপত্তি স্বীকার করিলে সর্ব্বত্রই তুল্য কারণের সমবধান হইয়া পড়ে, অথচ পূর্ব্বেই বলা হইয়াছে যে, কারণের বৈচিত্র্য না হইলে কার্য্যের বৈচিত্র্য হইতে পারে না; সুতরাং ভোগেরও বৈচিত্র্য অসম্ভব হয় ॥ ১৭ ॥

"অন্য ধর্ম্মদ্বারা অন্যত্র কার্য্যোৎপত্তি স্বীকার করিলেও প্রকৃতিই তাহার নিয়ামিকা হইবে, অর্থাৎ যেই পুরুষের প্রতি প্রকৃতি প্রবর্ত্তা হইবে, তাহারই বন্ধ হইবে" ইহাই অতঃপর বলিতেছেন—

"প্রকৃতিনিমিত্তকই যে বন্ধ হইবে, তাহাও বলা যায় না; যেহেতু সেই প্রকৃতিরও পরাধীনতা আছে অর্থাৎ স্বাধীনতা নাই।"

यदि प्रकृत्यादिनिबन्धन आत्मनो बन्धो नास्ति, स्वभावेनापि नास्ति, तर्हि मोक्षशास्त्रोपदेशो व्यर्थः स्यादित्यत आह—

**न नित्यशुद्धबुद्धमुक्तस्वभावस्य तद्योगस्तद्योगादृते ॥ १९ ॥**

शुद्धेति—गुणासङ्गी। बुद्धेति—स्वच्छः। तद्योगः बन्धयोगः। तद्योगादृते प्रकृतियोगादृते। अविवेकं विना नात्मनः कदापि बन्धः,

---

दिना। भवतु तर्हि कर्म्मणैव बन्ध इति तटस्थाशङ्कां निराकरोति तत्र चोक्तो दोष इति। न कर्म्मणान्यधर्म्मत्वादित्यादिसूत्रद्वयेनोक्त इत्यर्थः ॥ १८ ॥

वह्निसंयोगाज्जलौष्ण्यवत् प्रकृतिसंयोगादौपाधिको बन्ध इति स्वसिद्धान्तस्य प्रदर्शकं सूत्र-मुत्थापयितुं भूमिकामारचयति—यदीत्यादिना।

सूत्रे नित्यत्वं—कालानवच्छिन्नत्वं। मुक्तस्वभावत्वं सदापारमार्थिकदुःखायुक्तत्वं। शुद्धो गुणासङ्गी—सदा पापपुण्यादियुतः। स्वच्छः—सदैवालुप्तचिद्रूपः। आत्मनो नित्य-शुद्धत्वादौ "अयमात्मा सर्वस्य नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरञ्जनो विभु"रित्यादिश्रुतिरेव प्रमाणम्। प्रकृतियोगादृत इति। तथा च यथा स्वभावशुद्धस्य स्फटिकस्य रागयोगो जवादिरूपो-पाधियोगं विना न घटते, तथैव नित्यशुद्धबुद्धमुक्तस्वभावस्य पुरुषस्य प्रकृतियोगरूपोपाधियोगं विना प्रतिबिम्बात्मकापारमार्थिकदुःखयोगरूपबन्धनं घटत इति सूत्रतात्पर्य्यार्थः, बन्धस्यैता-दृशौपाधिकत्वलाभायैव च सूत्रे नञ्द्वयेन वक्राभिधानं। ननु कालादेरिव प्रकृतिसंयोगस्यापि मुक्तामुक्तसाधारणतया कथं बन्धहेतुत्वमित्याशङ्कायां स्वोक्तप्रकृतिसंयोगपदस्य स्वस्वामिभावा-

---

প্রকৃতির ব্যাপিত্বনিবন্ধন সমস্ত পুরুষের সহিতই তুল্য সম্বন্ধ ; সুতরাং কর্ম্ম ভিন্ন ( কেবল প্রকৃতিদ্বারা ) নিয়ম হইতে পারে না ; অতএব প্রকৃতিরও কর্ম্মাধীনত্বনিবন্ধন বন্ধনিয়ামকত্ব অসম্ভব। কর্ম্মের বন্ধনিয়ামকত্বে যে দোষ তাহাও পূর্ব্বেই বলা হইয়াছে ॥ ১৮ ॥

যদি প্রকৃত্যাদিনিবন্ধন আত্মার বন্ধন না হয়, স্বভাবতঃও না হয়, তবে মোক্ষশাস্ত্রোপদেশ ব্যর্থ হউক, এই আশঙ্কায় বলিতেছেন—

"নিত্য-শুদ্ধ-বুদ্ধ-মুক্ত-স্বভাব আত্মার তদ্‌যোগ ( বন্ধযোগ ) তদ্‌যোগ ( প্রকৃতিযোগ ) ব্যতীত সম্ভব হয় না।"

किन्तु अविवेकाद्‌बन्धः इत्यभिप्रायः। स च शास्त्रोपदेशात् नाम वेदितव्यः ॥ १८ ॥

अथ अविद्यया तस्य बन्धो भविष्यतीत्यत आह—

**नाविद्यातोऽप्यवस्तुना बन्धायोगात् ॥ २० ॥**

अविद्या हि विद्याप्रागभावः प्रध्वंसाभावो वा। उभयथापि अवस्तु। न चावस्तुना वस्तुनः आत्मनः सम्भवति बन्धः। तस्माद‌विद्यया बन्ध इति व्यपदेशमात्रं, न तत्त्वम् ॥ २० ॥

---

परपर्य्याश्रकानादिसंस्कारात्मकाविवेकपरत्वं फलतः प्रदर्शयति—अविवेकं विनेत्यादिना। स चाविवेको बुद्धिधर्म्मोऽपि पुरुषे प्रतिबिम्बितस्तस्यौपाधिकं बन्धं सम्पादयति। प्रतिबिम्बग्राहित्वञ्च पुरुषस्य नीरूपस्यापि सांख्यसिद्धान्तसिद्धमित्यग्रे व्यक्तीभविष्यति ॥ १९ ॥

अविद्याया बन्धहेतुत्वस्य निवारकं सूत्रमवतारयति—अथेति। सूत्रे अविद्यातोऽपीत्यपि शब्दः पूर्व्वोक्तकालाद्यपेक्षया, न बन्धयोग इति शेषः।

सूत्रतात्पर्य्यं विवृणोति—अविद्या हीत्यादिना। उभयथा—अविद्यायाः प्रागभावरूपत्वे ध्वंसरूपत्वे वा, अवस्तुस्वरूपेणाव्यवस्थितं। ननु भवत्ववस्तु ततः किमित्यत आह—न चेति। यत् स्वयमेव स्वरूपेण न सिध्यति तस्य बन्धं प्रति हेतुत्वं सर्व्वथैवासम्भवदुक्तिकमिति भावः। तस्मात्—अवस्तुभूताया अविद्याया बन्धहेतुत्वासम्भवात्, व्यपदेशमात्रं—कथनमात्रं, न तत्त्वं—न वास्तवम् ॥ २० ॥

---

বস্তুতঃ, অবিবেক ভিন্ন কখনও পুরুষের বন্ধ হয় না, কিন্তু অবিবেক হইতেই বন্ধ হয়, ইহাই অভিপ্রেত। তাহাও শাস্ত্রোপদেশ হইতে জ্ঞাতব্য ॥ ১৯ ॥

"অবিদ্যাদ্বারা পুরুষের বন্ধ হইবে" এই প্রশ্নে বলিতেছেন—

"অবিদ্যা হইতেও বন্ধ হইতে পারে না, যে হেতু অবস্তু দ্বারা বন্ধযোগ অসম্ভব।"

বিদ্যার প্রাগভাব অথবা বিদ্যার ধ্বংসকে অবিদ্যা বলা যায়; উভয়থাই অবিদ্যা বস্তুভূত নহে। সুতরাং অবস্তুদ্বারা বস্তুভূত আত্মার বন্ধ সম্ভব হইতে পারে না। অতএব "অবিদ্যা দ্বারা বন্ধ হয়" এইটি কথার কথামাত্র, বাস্তবিক নহে ॥ ২০ ॥

नन्वभावः कारणमस्तु, तथापि अभावत्वं न जगतो भविष्यति, तत्राह—

**भावे तद्योगेन तत्सिद्धिरभावे तदभावात् कुतस्तरां तत्सिद्धिः ॥ ८० ॥**

भावे उपादानकारणे 'कारणगुणाः कार्य्यम्' इति तद्योगेन भावयोगेन तत्सिद्धिः कार्य्यस्य वस्तुत्वसिद्धिः। अभावे उपादानकारणे तदभावात् जगदभावस्य अवश्यम्भावात् कुतस्तत्सिद्धिरिति, अभावकारणतास्य अभावरूपत्वात् ॥ ८० ॥

कर्म्मैव जगत्कारणमस्तु, किं प्रधानकल्पनया ? इत्यत आह—

**न कर्म्मण उपादानत्वायोगात् ॥ ८१ ॥**

निमित्तकारणमदृष्टमस्तु, धर्माधर्मयोस्तु उपादानकारणत्वं न क्वचित् दृष्टम्। प्रकृतिपुरुषविवेकदर्शनात् मुक्तिरिति प्रकृतिस्वीकारः ॥ ८१ ॥

---

सूत्रान्तरमवतारयितुं शङ्कते—नन्वित्यादिना। जगदभावस्य—जगतोऽभावत्वस्य, तत्सिद्धिः, वस्तुत्वसिद्धिः, अभावरूपत्वात्—अभावरूपत्वौचित्यात्, तथाच जगतो भावत्वादेव नाभावोपादानकत्वमिति भावः ॥ ८० ॥

कर्म्मण उपादानत्वप्रतिषेधकं सूत्रं प्रश्नपूर्व्वकमवतारयति—कर्म्मैवेत्यादिना। सूत्रे योति

সর্ব্বদা অবাধিত। অতএব বস্তুরূপে জগৎ জ্ঞানের অবাধিতত্বনিবন্ধন জগৎ অবস্তু নহে ॥ ৭৯ ॥

অভাবই জগতের কারণ হউক, তথাপিও জগৎ অভাবস্বরূপ হইবে না, এই আশঙ্কায় বলিতেছেন—ভাব যদি উপাদান কারণ হয়, তবেই "কারণগুণ কার্য্যসংক্রান্ত হয়" এই নিয়ম অনুসারে ভাবযোগে কার্য্যের বস্তুত্ব সিদ্ধি হইতে পারে। কিন্তু অভাব যদি উপাদান কারণ হয়, তবে উক্ত নিয়মানুসারে জগতের অভাবরূপত্ব হওয়ায় অবস্তুভাবনিবন্ধন কি প্রকারে জগতের বস্তুত্ব সিদ্ধি হইবে? যে হেতু যাহার কারণ অভাব, তাহার অভাবস্বরূপ হওয়াই উচিত ॥ ৮০ ॥

वेदोक्तयागानुष्ठानादेव मुक्तिसम्भवात् किं प्रकृत्या इत्यत आह—

**नानुश्रविकादपि तत्सिद्धिः, साध्यत्वेनावृत्तियोगादपुरुषार्थत्वम् ॥ ८२ ॥**

वेदादनुश्रूयते इति आनुश्रविको यागादिः। तस्मादपि न मोक्षसिद्धिः, साध्यत्वेनावृत्तियोगात्—कार्य्यत्वेन अनित्यत्वात् मुक्तस्य पुनःसंसारानुवृत्तियोगः। तस्मात् अपुरुषार्थत्वम् ॥ ८२ ॥

कर्म्मणोऽपि वस्तुसिद्धिरिति शेषः। तत्र हेतुमाह—कर्म्मण उपादानत्वायोगादिति,—उपादानत्वायोगमेव विशदयति,—निमित्तेत्यादिना। न दृष्टमिति, तथाच दृष्टानुसारित्वात् कल्पनायाः क्वाप्युपादानत्वेनादृष्टचरे कर्म्मणि जगदुपादानत्वकल्पनं सर्व्वथैवासमीचीनमिति भावः। ननु प्रकृतेरेवाभावात् कथं तस्या जगदुपादानत्वमित्याशङ्कायां प्रकृतिं साधयति—प्रकृतीत्यादिना ॥८१॥

सूत्रान्तरमवतारयति—वेदेत्यादिना। सूत्रं व्याचष्टे—वेदादित्यादिना। तस्मादपीत्यपि-शब्देन दृष्टसमुच्चयः, तथा च—दृष्टादानुश्रविकादपि न मोक्षसिद्धिरित्यर्थः। अत्र हेतुमाह—साध्यत्वेनेत्यादिना। उपसंहरति—तस्मादिति। यागादिसाध्यस्यानित्यत्वादित्यर्थः, अपुरुषार्थत्वमिति आत्यन्तिकपुरुषार्थत्वाभाव इति भावः, अन्यथा यागादिसाध्यस्य कथञ्चिदपि पुरुषार्थत्वाभावे पुरुषार्थासाधकत्वेन यागादीनामननुष्ठानापत्तेः ॥ ८२ ॥

কর্ম্মই জগতের কারণ হউক, প্রধান কল্পনার প্রয়োজন কি? এই আশঙ্কায় বলিতেছেন—ধর্ম্মাধর্ম্মরূপকর্ম্ম নিমিত্ত কারণ হইয়া থাকে, কিন্তু তাহাদের উপাদানকারণত্ব কোথাও পরিদৃষ্ট হয় নাই, (সুতরাং উপাদানরূপে অপরিদৃষ্ট অদৃষ্টের জগদুপাদানত্বকল্পনা কখনও সমীচীন নহে, যে হেতু দৃষ্টানুসারেই কল্পনা হইয়া থাকে।) প্রকৃতিই নাই, কিরূপে তাহার উপাদান-কারণত্ব হইবে? এই আশঙ্কাও হইতে পারে না, কারণ প্রকৃতি পুরুষের ভেদ দর্শন হইতে মুক্তির বিধানদ্বারাই প্রকৃতি স্বীকার আবশ্যক ॥ ৮১ ॥

বেদোক্ত যাগাদি অনুষ্ঠান হইতেই ত মুক্তির সম্ভব হইতে পারে, অযথা প্রকৃতিস্বীকারে প্রয়োজন কি। এই আশঙ্কায় বলিতেছেন—যে সব যাগাদি-কার্য্য বেদে শ্রুত আছে, তাহার নাম আনুশ্রবিক, সেই আনুশ্রবিক কার্য্য হইতেও মোক্ষসিদ্ধি হইতে পারে না, কারণ মোক্ষ যাগাদিসাধ্য হইলে

पुरुषार्थत्वं दर्शयति—

**तत्र प्राप्तविवेकस्यानावृत्तिश्रुतिः ॥ ८३ ॥**

तत्र—प्रकृतिपुरुषयोः प्राप्तविवेकस्य विवेकज्ञानात् अनावृत्ति-श्रुतिः । 'न स पुनरावर्त्तते' इति श्रुतिः ॥ ८३ ॥

विपक्षे दोषमाह—

**दुःखाद् दुःखं, जलाभिषेकवन्न जाड्यविमोकः ॥ ८४**

यदि कर्मसाध्यो मोक्षो भवेत्, कर्मणो दुःखबहुलत्वात् तत् कार्य्यो मोक्षोऽपि दुःखबहुलः स्यात् । अन्ततः क्षयित्वेनापि दुःखं स्यात्

---

सूत्रान्तरमवतारयितुमाह—पुरुषार्थत्वमिति । आत्यन्तिकपुरुषार्थत्वमित्यर्थः, प्रकृतिपुरुष-विवेकदर्शनसाध्याया मुक्तेरिति शेषः । सूत्रीयं तत्रेतिपदं व्याचष्टे—प्रकृतिपुरुषयोरिति । प्राप्तविवेकस्य—लब्धभेदज्ञानस्य । अनावृत्तौ छान्दोग्याष्टमाध्यायश्रुतिमुदाहरति—नेती-त्यादिना ॥ ८३ ॥

सूत्रान्तरमवतारयति—विपक्ष इत्यादिना । विपक्षे—मोक्षस्य दुःखप्रबलकर्मसाध्यत्वे । "दुःखादुःख" मित्यंशस्य तात्पर्यं विवृणोति—यदीत्यादिना । कार्य्यकारणयोस्तुल्यरूपत्वे विप्र-तिपन्नं प्रत्याह—अन्तत इति । कर्म्मसाध्यत्वेन दुःखरूपत्वाभावेऽपीत्यर्थः । जलेत्याद्यंशस्य तात्पर्यं विवृणोति—नहीत्यादिना । तथाच—"दुःखात्—दुःखबहुलकर्म्मणः, यदि मोक्षोऽपी

---

কার্য্যত্ব নিবন্ধন অনিত্য হইয়া পড়ে, অনিত্যত্ব হইলে মুক্ত পুরুষেরও পুনরায় সংসারানুসরণপ্রসক্তি হয়। অতএব যাগাদি সাধ্যের আত্যন্তিক পুরুষার্থত্ব হইতে পারে না ॥ ৮২ ॥

প্রকৃতিপুরুষের বিবেকদর্শনজন্য মোক্ষের আত্যন্তিক পুরুষার্থত্ব দেখা-ইতেছেন—যে প্রকৃতিপুরুষের ভেদদর্শন করিয়াছে, তাহার যে আর সংসারে আসিতে হইবে না, তদ্বিষয়ে শ্রুতি আছে যথা—যে বিবেক লাভ করিয়াছে সে আর সংসারে আসে না" (অতএব প্রকৃতিপুরুষের বিবেক হইতেই মুক্তি হয় এবং তাহাই আত্যন্তিক পুরুষার্থ) ॥ ৮৩ ॥

মোক্ষের কর্ম্মসাধ্যত্বপক্ষে দোষ দেখাইতেছেন—মোক্ষ যদি কর্ম্মসাধ্য হয়, তবে কর্ম্মের দুঃখবহুলত্বনিবন্ধন তৎকার্য্য মোক্ষ ও দুঃখবহুল হইতে পারে।

नहि जाड्यार्त्तस्य जाड्यविमोक्षो जलाभिषेकात् प्रत्युत जाड्य-मेवेति ॥ ८४ ॥

दुःखस्य कर्मसाध्यत्वमप्रयोजकं, किन्तु काम्यकर्मसाध्यत्वं हेतुः, निष्कामकर्मणो मोक्षसाधनत्वात्। तथा च श्रुतिः—

कर्मभिर्मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमीहमानाः। अथापरे ऋषयो मनीषिणः परं कर्मभ्योऽमृतत्वमानशुरित्यत्राह—

**काम्याकाम्येऽपि साध्यत्वाविशेषात् ॥ ८५ ॥**

मा भूत् निष्कामकर्मसाध्यं दुःखं, तथापि काम्यात् निष्कामकर्म-विशेषेऽपि मोक्षस्य कर्मसाध्यत्वमविशिष्टम्। साध्यत्वात् क्षयित्वेन

क्रियेत तदेति शेषः। दुःखं—मोक्षोऽपि दुःखबहुल एव स्यादिति शेषः, न तु दुःखनिवृत्तिरिति भावः जलाभिषेकवत्—जाड्यार्त्तस्य जलाभिषेकाद्यथा—(जाड्यमेव) न जाड्यविमोकः—न जाड्यनिवृत्ति"रिति सूत्रार्थः ॥ ८४ ॥

रागद्वेषादिदोषवशादनुष्ठितानां काम्यकर्म्मणां दुःखजनकत्वेऽपि निष्कामकर्म्मणां तदभावान्मोक्षजनकत्वं स्यादित्याशङ्काया निरासकं सूत्रमवतारयति—दुःखस्येत्यादिना। "द्रविणं धनं ईहमानाः प्रार्थयमानाः प्रजावन्तः सन्तानिनः (आभ्यां विशेषणाभ्यां काम्यकर्म्मकारित्वं सूचितम्) ऋषयः केचिन्मुनयः कर्म्मभिः काम्यकर्म्मभिः मृत्युं मरणं निषेदुः प्रापुः। अथ अपरे मनीषिणः सद्विवेका ऋषयः कर्म्मभ्यः निष्कामकर्म्मभ्यः परं मुख्यं अमृतत्वं मरणाभावं मोक्षमिति यावत्, आनशुः लेभिरे।" इति सूत्रार्थः।

सूत्रतात्पर्य्यं विवृणोति—माभूदित्यादिना। निष्कामकर्म्मविशेषोऽपि निष्कामकर्म्मणो

অন্ততঃ বিনাশী বলিয়া ও দুঃখ হইতে পারে। যেমন জাড্যপীড়িত ব্যক্তিকে জলাভিষেক করিলে তাহার জাড্যনিবৃত্তি হয় না, পরন্তু জাড্যই বৃদ্ধি পায়, সেইরূপ মোক্ষ হইতেও দুঃখের নিবৃত্তি না হইয়া বরং বৃদ্ধিই হইতে পারে ॥ ৮৪ ॥

কর্ম্মসাধ্যত্বই যে দুঃখের প্রযোজক, তাহা নহে, পরন্তু কাম্যকর্ম্মসাধ্যত্বই দুঃখের হেতু, যে হেতু নিষ্কাম কর্ম্ম হইতে মোক্ষশ্রুতি আছে, যথা—"সন্তানশালী ধনার্থী ঋষিগণ কাম্যকর্ম্ম দ্বারা মৃত্যুলাভ করিয়াছেন। অপর সদ্বিবেচক ঋষি সকল নিষ্কাম কর্ম্ম হইতে পরম অমৃতত্ব অর্থাৎ মুক্তিলাভ করিয়াছেন।"

पुनरपि दुःखं स्यात् । निष्कामकर्म्मणो मोक्षसाधनत्वश्रुतिश्च ज्ञानार्था, ज्ञानाच्च मोक्ष इति पारम्पर्य्येण मोक्षसाधनत्वम् ॥ ८५ ॥

यदि प्रकृतिपुरुषविवेकज्ञानात् मोक्षो भवेत्, तथापि क्षयित्वात् पुनरपि संसार इति वादिप्रतिवादिनोः तुल्यत्वमिति, तत्राह—

**निजमुक्तस्य बन्धध्वंसमात्रं परं, न समानत्वम् ॥ ८६ ॥**

निजमुक्तस्य स्वभावमुक्तस्य बन्धध्वंसः—बन्धोऽविवेकः, तद्वि-

---

दुःखाजनकत्वरूपविशेषेऽपि, "कर्म्मसाध्यत्वमविशिष्ट"मित्यस्य प्रतिपाद्यं दर्शयति—साध्यत्वादित्यादिना, क्षयित्वेन—निष्कामकर्म्मसाध्यस्यापि मोक्षस्य विनाशित्वेन, पुनरपि दुःखं स्यादिति निष्कामकर्म्मसाध्यत्वेन मोक्षस्य दुःखरूपत्वाभावेऽपि जन्यत्वेन तद्विनाशे पुनर्दुःखोत्पत्तिर्दुष्परिहरैव स्यादिति भावः । नन्वेवं निष्कामत्वश्रुतेः का गतिरित्यत आह—निष्कामेत्यादि, ज्ञानार्था—ज्ञानप्रयोजनिका ज्ञानद्वारा मुक्तिप्रतिपादिकेति यावत् । स्पष्टयति—ज्ञानादित्यादिना ॥ ८५ ॥

सूत्रान्तरमवतारयति—यदीत्यादिना । वादिप्रतिवादिनोरिति, मोक्षस्य प्रकृतिपुरुषविवेकजन्यत्ववादिनिष्कामकर्म्मजन्यत्ववादिनोरित्यर्थः । सूत्रं व्याचष्टे—निजेत्यादिना । बन्धध्वंसपदार्थं व्याख्यातुं बन्धपदार्थं व्याचष्टे—बन्धोऽविवेक इति । तद्विरोधेन—अविवेक-

---

এই আশঙ্কায় বলিতেছেন—নিষ্কাম কর্ম্মসাধ্য বলিয়া মোক্ষ দুঃখবহুল না হইলেও কাম্য কর্ম্ম হইতে নিষ্কামকর্ম্মের দুঃখের অজনকত্বরূপ বিশেষ থাকিলেও মোক্ষে যে কর্ম্মসাধ্যত্ব থাকিবে, তাহাতে কোনও বিশেষত্ব নাই. মোক্ষসাধ্য হইলেই তাহার বিনাশ হইবে, বিনাশ হইলেই পুনরায় দুঃখ অবশ্যম্ভাবী। পূর্ব্বে যে নিষ্কাম কর্ম্মের মোক্ষসাধনত্বশ্রুতি প্রদর্শিত হইয়াছে, তদ্দ্বারাও নিষ্কাম কর্ম্মের পরম্পরামুক্তিসাধকত্বই প্রতিপাদিত হইয়াছে, অর্থাৎ নিষ্কাম কর্ম্ম হইতে তত্ত্বজ্ঞান হয় ও তত্ত্বজ্ঞান হইতে মুক্তি হয়। সুতরাং নিষ্কাম কর্ম্মও সাক্ষাৎ মুক্তির সাধক নহে ॥ ৮৫ ॥

যদি প্রকৃতি পুরুষের বিবেক হইতে মুক্তি হয়, তাহা হইলেও মুক্তির বিনাশিত্বনিবন্ধন পুনরায় সংসারের আপত্তি হইতে পারে, সুতরাং এই আপত্তিবাদী ও প্রতিবাদী (অর্থাৎ মোক্ষের নিষ্কাম কর্ম্মসাধ্যত্ববাদী ও প্রকৃতিপুরুষবিবেকসাধ্যত্ববাদী) উভয়ের পক্ষই সমান, এই আশঙ্কা

रोधेन अविवेकध्वंसो नाशः । अविवेकनाशस्य च प्रध्वंसत्वात् कुतः संसारस्य पुनरावर्त्तनमिति न समानत्वम् ॥ ८६ ॥

पञ्चविंशतिर्गण इत्युक्तं, तत्सिद्धिश्च न प्रमाणेन विनेति । तद्दर्शयति—

**द्वयोरेकतरस्य वाप्यसन्निकृष्टार्थपरिच्छित्तिः प्रमा । तत्साधकतमं यत् तत् ॥ ८৭ ॥**

द्वयोरिति इन्द्रियार्थयोर्विद्यमानयोः प्रत्यक्षे । 'एकतरस्य वापि' इति विद्यमानस्य लिङ्गस्य शब्दस्य वानुमाने शब्दे च । असन्नि-

विरोधेन विवेकेनेति यावत्, अत्राविवेकविरोधितया विवेकस्योपन्यासस्तदविरोधिना कर्म्मादिना अविवेकविनाशासम्भवद्योतनार्थः, प्रध्वंसरूपत्वादिति च विवेकजन्यस्याप्यविनाशरूपमोक्षस्याविनाशित्वसूचनार्थं, तथाच मोक्षस्य निष्कामकर्म्मजन्यत्ववादिभिस्ताद्दशध्वंसस्वरूपत्वाङ्गीकार: सम्भवादविनाशित्वप्रतिपादनमशक्यमिति न समानत्वमुभयोरिति मन्तव्यम् । सूत्रे मात्रपदेन बन्धध्वंसातिरिक्तत्वव्यवच्छेदः, तथाच बन्धध्वंस एव परं—आत्यन्तिकं फलं विवेकज्ञानस्येत्यर्थः ॥ ८६ ॥

प्रमाणलक्षणप्रतिपादकं सूत्रमवतारयति—पञ्चेत्यादिना । गणः—समुदायः, तत्सिद्धिः—प्रकृत्यादिपञ्चविंशतितत्त्वसिद्धिः, तत—प्रमाणम् । सूत्रे द्वयोरेकतरस्य वापीत्यनन्तरं "प्रमायां उपयोग" इति पूरणीयम्, तत्र कस्यां प्रमायां द्वयोः, कस्यां वा एकतरस्योपयोग इत्याकाङ्क्षायां व्याख्यानतो वृत्तौ विशिष्य दर्शयति—द्वयोरित्यादिना । इन्द्रियार्थयोरपि प्रत्यक्षकाले विद्यमानयोरेवोपयोगित्वात् पूरयति—विद्यमानयोरिति, प्रत्यक्षे—लौकिकप्रत्यक्षप्रमायां ।

বলিতেছেন—পুরুষ স্বভাবতঃই মুক্ত, তবে প্রকৃতি পুরুষের বিবেক হইতে অবিবেকের নাশ হয় মাত্র। সেই নাশও প্রধ্বংসস্বরূপ বিধেয়, তাহার বিনাশ নাই, সুতরাং কিরূপে পুনরায় সংসারের আপত্তি হইবে? অতএব উভয় পক্ষের তুল্যতা হইতে পারে না। এ স্থলে ইহাও জ্ঞাতব্য যে নিষ্কাম কর্ম্ম হইতে অবিবেকের ধ্বংস স্বীকার করা যায় না, কারণ তাহাদের জ্ঞানও বিরোধিতা নাই ॥ ৮৬ ॥

প্রকৃতি পুরুষ প্রভৃতি পঞ্চবিংশতি তত্ত্বের কথা বলা হইয়াছে, কিন্তু

कृष्टार्थपरिच्छित्तिः, इति अपरिच्छिन्नार्थपरिच्छित्तिः प्रमा प्रमितिः फलम्। एतेनानधिगतार्थगन्तृप्रमाणमित्युक्तम्। प्रमासाधकतमं यत् तत् प्रमाणमिति प्रमाणसामान्यलक्षणम्॥ ८७॥

---

अतीतानागतविषययोरप्यनुमितिशाब्दबोधोदयादनुमितिकाले शाब्दबोधकाले च विषयसत्त्वं नापेक्षितमिति तत्र कतरस्योपयोगमाह—एकतरस्य वापीतीत्यादिना। लिङ्गस्येति ज्ञायमानलिङ्गस्य करणत्वमताभिप्रायेणोक्तं, वस्तुतस्तु लिङ्गज्ञानस्यैत्येव वक्तव्यं, अन्यथा—अतीतानागत लिङ्गाभ्यामनुमित्यनुदयापत्तेः। अनुमाने—अनुमितौ, शब्दे—शाब्दबोधे। तथाच प्रत्यक्षप्रमायां विद्यमानयोरिन्द्रियार्थयोः अनुमितौ विद्यमानस्य लिङ्गज्ञानस्य शाब्दबोधे च विद्यमानस्य शब्दस्योपयोगित्वमिति निर्गलितार्थः। एतच्च वस्तुगतिमनुरुध्योक्तं, न तु प्रमाणस्वरूपनिरूपकत्वेन वैयर्थ्यादिति मन्तव्यम्।

प्रमास्वरूपे निरूपित एव तत्करणतया प्रमाणनिरूपणं सुघटमित्यादौ प्रमास्वरूपमेव सूत्रे निरूपयति—असन्निकृष्टार्थपरिच्छित्तिरिति। एतदेव वृत्तिकारः स्पष्टयति—अपरिच्छिन्नार्थ-प... अपरिच्छिन्नस्य—अनधिगतस्य अर्थस्य—वस्तुनः परिच्छित्तिः—अवधारणमिति तदर्थः, तथाचापरिच्छिन्नेत्यनेन स्मृतेः, अर्थेत्यनेन भ्रमस्य, परिच्छित्तिरित्यनेन च संशयस्य व्युदासः। नन्वेवं "घटो घट" इत्यादिधारावाहिकप्रत्यक्षस्थले द्वितीयादिप्रत्यक्षाणामधिगतार्थविषयकत्वेन प्रमात्वानुपपत्तिरिति चेन्न धारावाहिकघटादिप्रत्यक्षस्थले यावद्विकघटादिविषयाकारा चित्तवृत्तिर्नोदेति, तावद्घटादिविषयकं प्रत्यक्षमेकमेवेति द्वितीयादिप्रत्यक्षाभावेन तत्राव्याप्तेराशङ्काया अयोगात्। तथाचोक्तं वेदान्तपरिभाषाकारेण—"सिद्धान्ते धारावाहिकबुद्धिस्थले न ज्ञानभेदः, किन्तु यावद्घटस्फुरणं तावद्घटाकारान्तःकरणवृत्तिरेकैव, नतु नाना. वृत्तेः स्वविरोधिवृत्त्युत्पत्तिपर्यन्तंस्थायित्वाभ्युपगमादिति। शब्दशक्तिप्रकाशिकाकारस्तु—"यज्जातीयविशिष्टज्ञानत्वावच्छेदेन समानाकारकनिश्चयोत्तरत्वं तत्त्वं तज्जातीयान्यपयार्थज्ञानस्यैवागृहीतग्राहित्वेन प्रमात्वमङ्गीकृत्य धारावाहिकप्रत्यक्षस्थले द्वितीयादिप्रत्यक्षे समानाकारकनिश्चयोत्तरत्वस्य सत्त्वेऽपि प्रत्यक्षसामान्ये तदसत्त्वात् स्मृतिसामान्ये तत्सत्त्वाच्चानिरुक्ताद्वितीयादिप्रत्यक्षेऽव्याप्तिं स्मृतावतिव्याप्तिञ्च निवारितवानित्यनुसन्धेयम्।

...ব্যতিরেকে তাহাদের সিদ্ধি হইতে পারে না অতএব প্রমাণ বলিতেছেন—

প্রত্যক্ষে বিদ্যমান ইন্দ্রিয় ও অর্থের অনুমিতিতে বিদ্যমান লিঙ্গজ্ঞানের এবং শাব্দবোধে বিদ্যমান শব্দের আবশ্যকতা আছে, অর্থাৎ ইহারা বিদ্যমান

कति प्रमाणानीत्यत आह—

त्रिविधं प्रमाणम् । तत्सिद्धौ सर्वसिद्धेर्नाधिक्य-सिद्धिः ॥ ८८ ॥

प्रत्यक्षानुमानशब्दाः प्रमाणानीति । किमुपमानार्थापत्त्यभाव-सम्भवैतिह्यानि न स्युरिति ? अत्रोक्तं 'तत्सिद्धौ' इत्यादि । प्रमेय-

फलितमाह—एतेनेत्यादिना । एतेन—अनधिगतवस्तुनिश्चयस्य प्रमात्वेन, अननुभूतार्थ-गन्तृ—अननुभूतस्य वस्तुनो निश्चायकं, प्रमाणं—प्रमाणपदप्रतिपाद्यं, उक्तं—सूत्रकारेण सूचितम् । तथाच स्मृतिभ्रान्तिसंशयगमकानि न प्रमाणपदप्रतिपाद्यानीति भावः । सूत्रीयं तत्साधकतम-मिति पदं प्रमाणलक्षणपरतया व्याचष्टे—प्रसेत्यादिना । प्रमाणसामान्यलक्षणमिति तादात्म्येन प्रमाणसामान्यस्य लक्षणमित्यर्थः । तथाच न लक्षणस्य लक्ष्यासत्त्वमिति विभावनीयम् ॥ ८७ ॥

सन्ति प्रमाणे संख्याविप्रतिपत्तयः, यथा—

"प्रत्यक्षमेकं चार्व्वाकाः कणादसुगतौ पुनः ।
अनुमानञ्च तच्चापि सांख्याः शब्दञ्च ते उभे ॥
न्यायैकदेशिनोऽप्येवमुपमानञ्च केचन ।
अर्थापत्त्या सहितानि चत्वार्य्याहुः प्रभाकराः ॥
अभावषष्ठान्येतानि भाट्टा वेदान्तिनस्तथा ।
सम्भवैतिह्ययुक्तानि तानि पौराणिका जगुः ॥" इति,

तस्मात् संख्याविप्रतिपत्तिनिरासकं सूत्रांशमवतारयति—कतीत्यादिना । तिस्रो विधाः प्रकारा यस्य तत् त्रिविधं प्रमाणं, न न्यूनं नाप्यधिकमित्यर्थः । विज्ञानभिक्षुस्तु त्रिविधं प्रमाण-मित्यंशं पूर्व्वसूत्रघटकमङ्गीकृत्य व्याख्यातवान् । तत्त्रैविध्यमेव नामनिर्द्देशेन विशदयति—प्रत्यक्षे-त्यादिना । आधिक्यप्रतिषेधहेतुभूतस्योपमानादीनां प्रत्यक्षादन्तर्भावस्य प्रदर्शकं सूत्रोत्तरांशमवतारयितुं

না থাকিলে প্রত্যক্ষাদি প্রমার উৎপত্তি হয় না। পূর্ব্বানুভূত বস্তুর নির্ণয়ের নাম প্রমাণরূপ ফল, সুতরাং পূর্ব্বানুভূত বস্তুর নিশ্চয় প্রমাণ পদের প্রতিপাদ্য যে প্রমার প্রকৃষ্টসাধক অর্থাৎ করণ, সেই প্রমাণ, ইহাই প্রমাণসামান্যের লক্ষণ ॥ ১৭ ॥

প্রমাণ কত প্রকার ? এই প্রশ্নে বলিতেছেন—প্রত্যক্ষ, অনুমান ও শাব্দ এই তিন প্রকার প্রমাণ। উপমান, অর্থাপত্তি, অভাব, সম্ভব ও ঐতিহ্য কি

ব্যবস্থার্থং প্রমাণস্বীকারঃ, ত্রিবিধপ্রমাণসিদ্ধৌ সর্ব্বপ্রমাণানাং প্রমেয়ব্যবস্থাসিদ্ধের্নাধিক্যসিদ্ধিঃ পৃথক্প্রমাণত্বেন, ত্রিবিধপ্রমাণেষু এষামন্তর্ভাবাদিতি। ইন্দ্রিয়ার্থসন্নিকর্ষোন্বয়ব্যতিরেকাদিনা যথাযথং প্রত্যক্ষাদিষু সূরিভিরন্তর্ভাবিতত্বাৎ কেবলমধিকঃ সংজ্ঞাভেদঃ কৃত ইতি নাধিকত্বেন প্রমাণসিদ্ধিঃ॥ ৮৮॥

পৃচ্ছতি—কিমিত্যাদিনা। উপমানার্থাপত্ত্যভাবসম্ভবৈতিহ্যানীতিবাদিভিঃ পৃথক্প্রমাণত্বেনাভ্যুপগতানীত্যর্থঃ, ন স্যুরিতি প্রমাণানানীত্যাদিঃ। ত্রিবিধপ্রমাণসিদ্ধাবিতি তৎসিদ্ধাবিত্যস্য বিবরণম্, ত্রিবিধানাং প্রত্যক্ষানুমানশব্দানাং প্রমাণানাং সিদ্ধাবিত্যর্থকং সর্ব্বপ্রমাণানাং প্রমেয়ব্যবস্থাসিদ্ধিরিতি চ। সর্ব্বসিদ্ধেরিত্যস্য বিবরণং, নিরুক্তৈস্ত্রিবিধৈরেব প্রমাণৈরিতি ভাবঃ। আধিক্যেন সিদ্ধিরাধিক্যসিদ্ধিরিতি তৃতীয়াতৎপুরুষমধিকৃত্য তদ্ঘটকাধিক্যপদস্যার্থমাহ—পৃথক্প্রমাণত্বেনেতি। তথাচ পৃথক্প্রমাণত্বেন ন বাদ্যভিমতানামুপমানাদীনাং সিদ্ধিরিত্যর্থঃ। অত্র হেতুং দর্শয়তি—ত্রিবিধেত্যাদিনা। এষাং—উপমানাদীনাং, অন্তর্ভাবাৎ—অন্তর্গতত্বাৎ। অত্র আর্ষসম্মতিং দর্শয়তি—ইন্দ্রিয়ার্থেত্যাদিনা। অন্তর্ভাবিতত্বাৎ—অন্তর্গতীকৃতত্বাৎ, তথাহি—বৈদান্তিকৈঃ সাদৃশ্যজ্ঞানকরণমুপমানমঙ্গীক্রিয়তে—তৎ সাদৃশ্যজ্ঞানং যদি "যথা গৌস্তথা গবয়" ইত্যাদিবাক্যজন্যং তদা শাব্দবোধ এবেতি তৎকারণং শব্দ এবান্তর্ভবতি, যচ্চ চক্ষুঃসন্নিকৃষ্টে গবয়ে গোসাদৃশ্যজ্ঞানং তৎ প্রত্যক্ষমেবেতি তৎকরণং প্রত্যক্ষ এবান্তর্ভবতি। অত এব স্মর্য্যমাণায়াং গবি যৎ গবয়সাদৃশ্যজ্ঞানং তদপি তথা, গবি গবয়সাদৃশ্যস্য গবয়বৃত্তিগোসাদৃশ্যাব্যতিরিক্তত্বাৎ, তথাচ তৎকরণমপি প্রত্যক্ষ এবান্তর্ভবতি। নৈয়ায়িকাস্তু গবয়াদিপদশক্তিজ্ঞানমুপমিতিস্তৎকরণং গবাদিসাদৃশ্যজ্ঞানমুপমানং প্রমাণমিতি মন্যন্তে, তৎশক্তিজ্ঞানমপি গবয়শব্দো গোসদৃশস্য বাচকঃ, অসতি বৃত্ত্যন্তরে বৃদ্ধৈস্তত্র প্রযোজ্যমানত্বাদিত্যাদিপ্রয়োগসাধ্যানুমিতিরেবেতি তৎকরণমপ্যনুমান এবান্তর্ভবতি। তথাচোপমানস্য নাস্তি তথা প্রমেয়ান্তরং, যেনোপমানং প্রমাণান্তরং ভবেদিতি সিদ্ধং নোপমানং প্রত্যক্ষাদ্যতিরিক্তং প্রমাণমিতি।

তবে প্রমাণ নহে? এই আশঙ্কায় সূত্রকার "তৎসিদ্ধৌ" ইত্যাদি সূত্রাংশ বলিয়াছেন, ইহার তাৎপর্য্য এই যে, প্রমেয় ব্যবহার জন্যই প্রমাণ স্বীকার করিতে হয়। প্রত্যক্ষাদি ত্রিবিধ প্রমাণের সিদ্ধি থাকিলেই বাদিদিগের অভিমত উপমান অর্থাপত্তি প্রভৃতি প্রমাণের প্রতিপাদ্য বিষয়ের সিদ্ধি হয় বিধায় পৃথক্রূপে উপমান অর্থাপত্তি প্রভৃতি প্রমাণ স্বীকারের

বিশেষলক্ষণমাহ—

**যৎসম্বন্ধসিদ্ধং তদাকারোল্লেখি বিজ্ঞানং তৎ-প্রত্যক্ষম্ ॥ ৮৯ ॥**

'যৎসম্বন্ধসিদ্ধম্' ইত্যনুমানশব্দৌ ব্যবচ্ছিন্নৌ। তদাকারো-

---

প্রভাকরাদিভিস্ত অনুপপত্তিধীমূলকার্থান্তরকল্পনং অর্থাপত্তিঃ প্রমিতিঃ, তৎকরণঞ্চানুপপত্তিধীঃ অর্থাপত্তিঃ প্রমাণান্তরমিতি মন্যতে, যথা জীবিনো দেবদত্তস্য গৃহাসত্ত্বদর্শনে জীবিত্বান্যথানুপপত্ত্যা বহিঃসত্ত্বকল্পনমর্থাপত্তিস্তৎকরণঞ্চার্থাপত্তিঃ প্রমাণান্তরমিতি। অর্থাপত্তিশব্দস্য অর্থস্যাপত্তিরিতি ব্যুৎপত্ত্যা প্রমিতেঃ অর্থস্যাপত্তির্যস্মাদিতি ব্যুৎপত্ত্যা প্রমাণস্য চ প্রতিপাদকঃ। তদস্যা অর্থাপত্তেঃ সাংখ্যাদিমতে অনুমান এবান্তর্ভাবঃ, গৃহসত্ত্ববহিঃসত্ত্বান্যতরব্যাপ্য জীবিত্বজ্ঞানেন তয়োরন্যতরসিদ্ধৌ জায়মানায়াং গৃহসত্ত্বস্য বাধাদ্বহিঃসত্ত্বস্যৈবানুমিতৌ ভাসমানত্বাৎ।

ভট্টাদিভিরভাবগ্রহণার্থং প্রতি যোগ্যানুপলব্ধিরূপাভাবো হি পৃথক্ প্রমাণতয়াঙ্গীক্রিয়তে, সোঽপি ন যুক্তিসহঃ, যস্মাদধিকরণস্য কৈবল্যলক্ষণপরিণামবিশেষাদতিরিক্তোঽভাব এব ন সিধ্যতি, তৎপরিণামভেদস্য চ ঐন্দ্রিয়কত্বান্নাস্তি তদ্গ্রহণায় প্রমাণান্তরাপেক্ষেতি। তথাচ সিদ্ধমভাবোঽপি ন প্রমাণান্তরমিতি।

তদ্ঘটিতে তস্যাবশ্যং সম্ভবাৎ তদ্ঘটিতজ্ঞানেন তজ্জ্ঞানার্থং সম্ভবোঽপি প্রমাণান্তরতয়া পৌরাণিকৈরঙ্গীক্রিয়তে, যথা দিনাদিঘটিতমাসাদিজ্ঞানেন তদ্ঘটকদিনাদিজ্ঞানং সম্ভবাদ্ভবতি। স সম্ভবোঽপ্যনুমান এবান্তর্ভবতি, দিনাদিব্যাপ্যমাসত্বাদিজ্ঞানেনৈব দিনাদিজ্ঞানাৎ তদ্দিনাদিজ্ঞানস্যানুমিত্যব্যতিরিক্তত্বাৎ।

যদ্যপি প্রবাদপারম্পর্য্যমাত্রং "ইতি হোচুর্বৃদ্ধা" ইত্যৈতিহ্যং নাম প্রমাণান্তরং পৌরাণিকৈরঙ্গীক্রিয়তে, যথেহ বটে যক্ষঃ প্রতিবসতীত্যাদি তদপি ন যুক্তিসহং তস্যানির্দ্দিষ্টপ্রবক্তৃকত্বে সাংশয়িকত্বেনাপ্রমাণত্বাৎ, আপ্তপ্রবক্তৃকত্বনিশ্চয়ে তু আগম এবান্তর্ভাবাৎ। তথাচ সিদ্ধং প্রমাণে নিরুক্তত্রিবিধাতিরিক্তত্বং নাস্তীতি ॥ ৮৮ ॥

---

কোনও প্রয়োজন নাই, যেহেতু প্রত্যক্ষাদি ত্রিবিধ প্রমাণেই তাহাদের অন্তর্ভাব হইতে পারে। প্রাচীন পণ্ডিতেরাও ইন্দ্রিয় অবিষয়ের সন্নিকর্ষাদির অন্বয়-ব্যতিরেকাদি অনুসারে উপমানাদিকে যথাযথরূপে প্রত্যক্ষাদিরই অন্তর্গত করিয়াছেন। অতএব উপমানাদিরূপে কেবল অধিক নাম ভেদ করা হইয়াছে। সুতরাং প্রত্যক্ষাদির অতিরিক্ত প্রমাণ যুক্তিতর্কসিদ্ধ নহে ॥ ৮৮ ॥

ल्लेखि—घटाकारोल्लेखि। तत्प्रत्यक्षम् सविकल्पकमपि प्रत्यक्षं संगृहीतम्। बौद्धास्तु निर्विकल्पकमेव प्रत्यक्षमिति वर्णयन्ति, कल्पनापोढ़मभ्रान्तं प्रत्यक्षमिति। नामजात्यादियोजनात्मिका प्रतीतिः कल्पना, सा च सविकल्पकेऽप्यस्तीति न प्रत्यक्षं प्रमाणम्। तन्न। अदुष्टसाक्षात्कारिप्रमाजनकसामग्रीजनितं प्रत्यक्षम्। तदुभयं, निर्वि-

प्रत्यक्षस्य सर्व्वप्रमाणोपजीव्यत्वात्, तदेवादौ निरूपणीयमिति तन्निरूपकं सूत्रमवतारयति—विशेषेत्यादिना। यदित्यादि सूत्रन्तु—सम्बन्धाय—घटादिविषयेणेन्द्रियाणां सन्निकर्षाय सिद्धं—प्रसिद्धं तदाकारोल्लेखि—घटादिविषयाकारतापन्नं यद्विज्ञानं—बुद्धिवृत्तिस्तत्प्रत्यक्षं—प्रत्यक्षप्रमाणमित्यर्थकं न तु येन विषयेण सह सम्बन्धात्—इन्द्रियसन्निकर्षात् सिद्धं—ज्ञातमित्याद्यर्थकं तथा सति वृत्तिः सम्बन्धार्थं सर्पतीति पञ्चमाध्यायसूत्रेण वृत्तेः सन्निकर्षजन्यत्वाभावसूचकेन विरोधापत्तेः। तथाच इन्द्रियार्थसन्निकर्षार्थकेन्द्रियसम्बन्धविषयाकारतापन्नवृत्तित्वं प्रत्यक्षप्रमाणलक्षणं फलितम्। भाष्यकारस्तु "यत् सम्बद्धं भवे" दिति पाठान्तरं परिकल्प्य "स्वार्थसन्निकर्षजन्याकारस्वाश्रयी वृत्तिः" प्रत्यक्षं प्रमाणमिति निष्कर्षं दर्शितवान्।

इन्द्रियार्थसम्बन्धसिद्धमित्यस्य व्यावृत्तिं दर्शयितुमाह—अनुमानशब्दौ व्यवच्छिन्नाविति। व्यवच्छिन्नौ—निराकृतौ, अनुमानशब्दयोरिन्द्रियार्थसन्निकर्षार्थकत्वाभावादिति भावः। तदाकारोल्लेखीति विशेषणन्तु स्वरूपयोग्यव्यावर्त्तनायेति ध्येयम्।

नन्वेवं सविकल्पकस्यापि निरुक्तप्रत्यक्षप्रमितित्वापत्तिरित्याशङ्कामिष्टापत्त्यापरिहर्त्तुमाह—तत्प्रत्यक्षमिति, तत्प्रत्यक्षं—निरुक्तप्रत्यक्षप्रमाणजन्यं सविकल्पकमपि—न केवलं निर्व्विकल्पकमित्यपेरर्थः, प्रत्यक्षं संगृहीतं—प्रत्यक्षप्रमितित्वेनाङ्गीकृतं, तथाच सविकल्पकस्यापि प्रत्यक्ष-

---

প্রত্যক্ষ প্রমাণের লক্ষণ বলিতেছেন—বিষয় ও ইন্দ্রিয়ের সন্নিকর্ষসাধক বিষয়াকারতাপন্ন বুদ্ধিবৃত্তিকে প্রত্যক্ষ প্রমাণ বলে। "সম্বন্ধসিদ্ধ" (বিষয় ও ইন্দ্রিয়ের সন্নিকর্ষসাধক) এই বিশেষণ দেওয়ায় অনুমান ও শব্দে অতিব্যাপ্তি হইল না। সূত্রের তদাকারোল্লেখি শব্দের অর্থই "বিষয়াকারতাপন্ন" এই বিশেষণ দেওয়াতে প্রত্যক্ষের স্বরূপ যোগ্যে অতিব্যাপ্তি হইল না, কারণ যে স্থলে প্রত্যক্ষপ্রমিতি জন্মে, সে স্থলেই বুদ্ধিবৃত্তি বিষয়াকারে পরিণত হয়, নচেৎ নহে। এই প্রত্যক্ষ প্রমাণ জন্য সকল্পক জ্ঞানও প্রত্যক্ষপ্রমিতিরূপে পরিগৃহীত হইবে। বৌদ্ধগণ কেবল নির্ব্বিকল্পকেই প্রত্যক্ষপ্রমিতি বলিয়া

कल्पकं सविकल्पकं च। किन्तु सादृश्यात्संस्कारोद्बोधद्वारेण स्मृत्या नामजात्यादिसंविदुत्पद्यते। अत एवाधिकप्रामाण्या सविकल्पकमिति विशेषसंज्ञा। न च स्मृत्या कश्चिद्दोषः सामग्रीप्रत्यवायो वा जनितः॥ अथ स्मृत्या सङ्कलितत्वान्न प्रमाणम्। अहो नैपुण्यं, वत्सङ्कारि प्रामाण्यं बाधते। तथा च—

---

प्रमितित्वस्वीकारान्नास्त्युक्ताशङ्कावसर इति भावः। सविकल्पकस्य प्रत्यक्षप्रमितित्वमनङ्गी-कुर्व्वतां बौद्धानां मतं दूषयितुमुपन्यस्यति—बौद्धास्त्वित्यादिना। निर्व्विकल्पकं—वैशिष्ट्यसंसर्गा-नवगाहिज्ञानं, एतत्कारेण सविकल्पकव्यवच्छेदः। बौद्धमतसिद्धं प्रत्यक्षप्रमितिलक्षणं दर्शयति—कल्पनेत्यादिना। कल्पनायाः वक्ष्यमाणलक्षणायाः अपोढं—भिन्नं अभ्रान्तं—भ्रमभिन्नं तदभाववति तत्प्रकारकमिति यावत्, ज्ञानमिति शेषः, प्रत्यक्षप्रमितिरित्यर्थः। लक्षणघटक-कल्पनापदार्थं दर्शयति—नामेत्यादिना, नामजात्यादिभिः विशेषणं योजनं सम्बन्धावगाहनं आत्मा स्वरूपं यस्याः तादृशी, सांसर्गिकविषयतावगाहिनीति यावत् प्रतीति ज्ञानं कल्पना-उच्यत इति शेषः। सविकल्पके एतत्प्रत्यक्षलक्षणासत्त्वं समर्थयितुमाह—सा चेति, निरुक्तकल्पना चेत्यर्थः। सविकल्पकेऽपीत्यपि शब्दो निश्चयार्थः, न तु निर्व्विकल्पकसमुच्चायकः निर्व्विकल्पकस्य सांसर्गिकविषयत्वाभावेन निरुक्तकल्पनाभिन्नत्वात्। अस्तीति तादात्म्यसम्बन्धेनेत्यादि इति—हेतोः न प्रत्यक्षं प्रमाणं—न प्रत्यक्षप्रमितिः सविकल्पकमिति शेषः। तथाच सविकल्पकस्य कल्पनाभिन्नत्वाभावेन न निरुक्तप्रत्यक्षप्रमितिलक्षणसत्त्वमिति बौद्धमतनिर्गलितार्थः। तदेतन्मतं दूषयति—तन्नेत्यादिना। सविकल्पकेऽपि प्रत्यक्षप्रमितित्वसत्त्वं व्यवस्थापयितुं स्वमतसिद्धं

থাকেন, "কল্পনাতিরিক্ত অভ্রান্ত জ্ঞানই" তাহাদের মতে প্রত্যক্ষপ্রমিতি. "নামজাত্যাদির সংসর্গাবগাহি প্রতীতির" নাম কল্পনা, সবিকল্পক এই কল্পনা হইতে ভিন্ন নহে, সুতরাং প্রত্যক্ষপ্রমিতিও নহে। বৌদ্ধদিগের এই সিদ্ধান্ত ঠিক নহে, কারণ "নির্দ্দোষ সাক্ষাৎকারাত্মক প্রমার জনক কারণসমষ্টি হইতে উৎপন্ন" জ্ঞানই প্রত্যক্ষপ্রমিত, সুতরাং নির্ব্বিকল্পক ও সবিকল্পক উভয়েই প্রত্যক্ষপ্রমিত। পরন্তু সাদৃশ্য সংস্কারের উদ্বোধবশতঃ স্মৃতিদ্বারাই সবিকল্পকে নামজাত্যাদির ভাণ হইয়া থাকে। অতএব নামজাত্যাদিরূপ অবিবেকের ভাণ হয় বলিয়াই (সবিকল্পক) এই বিশেষ সংজ্ঞা দেওয়া হইয়াছে। স্মৃতি কোনরূপ দোষ বা করণের বিফলতা জন্মায় নাই যে, তন্নিবন্ধন সবিকল্পক

संज्ञा हि स्मर्य्यमाणापि प्रत्यक्षत्वं न बाधते ।
संज्ञिनः सा तटस्था हि न रूपाच्छादनक्षमा ॥
ततः परं पुनर्वस्तु धर्म्मैर्जात्यादिभिर्यथा ।
बुद्ध्यावसीयते सापि प्रत्यक्षत्वेन संमता ॥ ८९ ॥

प्रत्यक्षप्रमितिलक्षणं निर्व्वक्ति--अदुष्टेत्यादिना । नन्वेवं सविकल्पके इन्द्रियसन्निकृष्टतत्तद्विषयेषु नामजात्यादिभानं कथमुपपद्यते इत्याह—सादृश्यादिति । सविकल्पकसंज्ञाकारणं स्फुटयति—अत एवेत्यादिना । ननु दोषाद्युत्पादनद्वारैव स्मृत्या सविकल्पके नामजात्यादिभाण-साधनात्तस्य प्रमात्वं न स्यादित्याशङ्कायामाह—न चेति । सामग्रीप्रत्यवायः—करणादि-वैकल्यम् । तथाच दोषाद्यजन्यत्वेन सविकल्पकस्य प्रमात्वे नास्ति बाधकमिति भावः । ननु मास्तु स्मृतिर्दोषादिजनिका, किन्तु तथापि स्वसहकारितयैव प्रमात्वव्याघातिका स्यादिति शङ्कते—अथेत्यादिना । तदेतत्सौत्प्रुष्ठनोक्त्या दूषयितुमाह—अहो इति । यत् प्रमाणस्य सहकारि तदेव यदि प्रमाणजन्यज्ञानस्य प्रामाण्यं बाधेत, तदा सहकारिणामालोकादीनामपि प्रामाण्यबाध-कत्वं स्यात् ? न चैवम्, तथाच स्मृतेः सहकारित्वेन सविकल्पकप्रामाण्यव्याघातकत्वकल्पनं सर्व्वथैवासमीचीनमिति भावः ।

स्मृत्या नामजात्यादिभाणे सविकल्पकस्य प्रत्यक्षप्रमात्वे च प्राचीनसम्मतिं दर्शयितुं श्लोकद्वय-मुपन्यस्यति—तथाचेत्यादिना । संज्ञेति जात्याद्युपलक्षकं, स्मर्य्यमाणापि—धर्म्मांशे स्मृत्या भासमानापि संज्ञा—नामजात्यादिप्रत्यक्षत्वं—धर्म्मांशे लौकिकसन्निकर्षादुत्पन्नस्य सविकल्पकस्य

---

প্রত্যক্ষপ্রমিতি হইতে পারিবে না। স্মৃতির সহকারিত্বনিবন্ধনই সবিকল্পকের প্রামাণ্য হইবে না, (ইহাও ঠিক নহে) যে হেতু "সহকারি প্রামাণ্যের বাধক হয়" এই কথা বলা নিতান্তই নিপুণতার অর্থাৎ মূর্খতার পরিচায়ক, কারণ যে সহকারি, সেই যদি প্রামাণ্যের বাধক হয় তবে আলোকাদিরূপ সহকারিও প্রামাণ্যের বাধক হইতে পারে। কিন্তু তাহা কাহারও সম্মত নহে। সবিকল্পকে যে স্মৃতিদ্বারাই নামজাত্যাদির ভাণ হয় এবং তাহার যে প্রত্যক্ষপ্রমিতিত্ব আছে, এ বিষয়ে প্রাচীনদিগেরও সুসম্মতি আছে। যথা—

স্মৃতিদ্বারা ধর্ম্ম্যংশে ভাসমান নামজাত্যাদি সবিকল্পকের প্রত্যক্ষপ্রমিতি-ত্বের বাধক হইতে পারে না, যে হেতু উদাসীন নামজাত্যাদি ধর্ম্মীর স্বরূপা-চ্ছাদনে অসমর্থ। ইহার তাৎপর্য্য এই যে, ইন্দ্রিয়সম্বদ্ধ শুক্তি প্রভৃতিতে

ननु योगिप्रत्यक्षाव्यापकत्वान्नेदं प्रत्यक्षलक्षणमित्यत आह—

योगिनामबाह्यप्रत्यक्षत्वान्न दोषः ॥ ९० ॥

बाह्यप्रत्यक्षलक्षणमिदं लौकिकं, योगिप्रत्यक्षं तु अबाह्यमलौकिकञ्च। अतो नाव्यापकत्वदोषः ॥ ९० ॥

प्रत्यक्षप्रमितित्वं न बाधते—न प्रतिबध्नाति। अत्र हेतुमाह—संज्ञिन इति। हि—यस्मात् तटस्था—उदासीना सा संज्ञा संज्ञिनः—धर्म्मिणः रूपाच्छादने—स्वरूपावरणे क्षमा—समर्था न भवति। अयमभिप्रायः—इन्द्रियसम्बन्धगतगादावारोप्यमाणं रजतत्वादिकं शुक्त्यादेः स्वरूपं प्रच्छादयदेव तज्ज्ञानस्य प्रामाण्यं बाधते, इह तु नामजात्यादिकं धर्म्मिविधया भासमानस्य वस्तुनः स्वरूपमप्रच्छादयदेव कथं तज्ज्ञानस्य प्रामाण्यं बाधितुं प्रभवेदिति। ततःपरं—स्मृत्यात्मकसहकारिसमवधानानन्तरं वस्तुनिर्व्विकल्पे भासमानं वस्तुतया विशेष्यीभूतं पदार्थजातम् पुनर्यया बुद्ध्या जात्यादिभिर्धर्म्मैरुपनीयते जात्यादिप्रकारतानिरूपितविशेष्यतया विषयीक्रियते, सापि बुद्धिः प्रत्यक्षत्वेन—प्रत्यक्षप्रमितित्वेन सम्मता—स्वीकृता। तथाच 'सा बुद्धिरेव सविकल्पकज्ञानमिति तस्य प्रत्यक्षप्रमितित्वं प्राचीनसम्मतमिति स्पष्टमायातम् ॥ ८९॥

ननु यत्सम्बन्धसिद्धेत्यादिसूत्रानुसारेण इन्द्रियार्थसन्निकर्षस्यापि अदुष्टसाक्षात्कारिप्रमाजनकसामग्रीघटकतया अतीतानागतव्यवहितादिविषयकयोगिप्रत्यक्षे विषयाणां तत्कालासत्त्वादिनेन्द्रियसन्निकर्षासम्भवात्तज्जनितत्वघटितनिरुक्तप्रत्यक्षप्रमितिलक्षणस्याव्याप्तिरिति शङ्कायां

আরোপ্যমাণ রজতত্ব প্রভৃতি ধর্ম্ম ধর্ম্মী শুক্তি প্রভৃতির স্বরূপ আচ্ছাদিত করিয়াই তত্তদ্বিষয়ক জ্ঞানের ভ্রমত্ব সম্পাদন করিয়া থাকে, সুতরাং এস্থানে নামজাত্যাদি ধর্ম্মীর স্বরূপাবরণে অসমর্থ হইয়া কিরূপে তদ্বিষয়ক জ্ঞানের ভ্রমত্ব সম্পাদন করিবে ?

নির্ব্বিকল্পে ভাসমান ঘটাদি বস্তুসকল স্মৃতিরূপ সহকারিসমবধানের অনন্তর যেই বুদ্ধিদ্বারা নাম জাত্যাদি ধর্ম্মবিশিষ্টরূপে প্রতিভাত হইয়া থাকে, সেই সবিকল্পক জ্ঞানও প্রত্যক্ষ বলিয়াই সম্মত ॥ ৮৯ ॥

এই স্থানে আশঙ্কা এই যে, পূর্ব্বোক্ত "অদুষ্টসাক্ষাৎকারিপ্রমাজনক-সামগ্রীজনিতং প্রত্যক্ষং" এইরূপ প্রত্যক্ষপ্রমিতির লক্ষণ হইতে পারে না। যে হেতু অতীতভবিষ্যৎ ব্যবহিত ও দূরবর্ত্তি বস্তুবিষয়ক যোগিদিগের প্রত্যক্ষে অব্যাপ্তি হয়, কারণ সূত্রোপাত্ত প্রত্যক্ষ প্রমাণের লক্ষণ অনুসারে দেখা যায়,

অথবা অনেন লক্ষণেন যোগিপ্রত্যক্ষস্যাপি সংগ্রহ ইতি পক্ষান্তর-মাহ—

**লীনবস্তুলব্ধাতিশয়সম্বন্ধান্ন দোষঃ ॥ ৯১ ॥**

সৎকার্য্যস্থিতেনষ্টমপি স্বকারণে লীনং ভূতত্বেন অস্তি, ভবিষ্যদপি স্বকারণেঽনাগতত্বেন অস্তি। যোগজধর্ম্মানুগ্রহাৎ লব্ধাতিশয়স্য

---

নিরায়কতয়া সূত্রান্তরমবতারয়িতুং শঙ্কতে—নন্বিতি। তত্তদনুপপত্তিবর্ণনব্যপদেশেনৌ-ক্তাশঙ্কাপরিহারং দর্শয়িতুমাহ—বাহ্যপ্রত্যক্ষলক্ষণমিদমিতি। ততঃ কিমিত্যত আহ—লৌকিকমিতি, তল্লক্ষ্যমপীত্যাদিঃ। অবাহ্যপদস্যার্থমাহ—অলৌকিকত্বেতি। চকার এবার্থে। উপসংহরতি—অত ইতি, যোগিপ্রত্যক্ষস্যালৌকিকত্বেনৈতৎপ্রত্যক্ষলক্ষণালক্ষ্যত্বাদিত্যর্থঃ। নাব্যা-পকত্বদোষ ইতি,—লক্ষ্যে লক্ষণাগমনস্যৈব তদ্দোষত্বাদিতি ভাবঃ ॥ ৯০ ॥

সূত্রান্তরমবতারয়তি—অথবেত্যাদিনা। অসৎকার্য্যবাদিমতে কারণলয়াসম্ভবাদাহ—সৎকার্য্যস্থিতেরিতি, সৎকার্য্যস্য সিদ্ধান্তসিদ্ধত্বাদিত্যর্থঃ। নষ্টমপি—নাশপ্রতিযোগিত্বেন ব্যবক্রিয়মাণমপি (বস্তু) ভূতত্বেন—অতীতত্বেন স্বকারণে অব্যক্তং লীনং—অব্যক্ততাপন্নং অস্তীত্যর্থঃ। ভবিষ্যদপি—অনাগতমপি প্রাগভাবপ্রতিযোগিত্বেন ব্যবক্রিয়মাণমপীতি যাবৎ; অনাগতত্বেন স্বকারণে লীনং অস্তীতি সম্বন্ধঃ। সৎকার্য্যবাদিমতে অতীতত্বেন কারণে অবস্থা-

বিষয়ের সহিত ইন্দ্রিয়ের সন্নিকর্ষ ও উক্ত সামগ্রীর অন্তর্গত অথচ অতীতাদি-বিষয়ক যোগিদিগের প্রত্যক্ষে বিষয় ও ইন্দ্রিয়ের সন্নিকর্ষজন্যত্ব সম্পূর্ণ অসম্ভব, যেহেতু বিষয়ের সত্তাদি কারণই অবিদ্যমান। অতএব ইহার উত্তরে বলি-তেছেন—উক্ত লক্ষণটি বাহ্য, অর্থাৎ লৌকিক প্রত্যক্ষপ্রমিতির লক্ষণ, সুতরাং তাহার লক্ষ্যও লৌকিক প্রত্যক্ষপ্রমিতি। অথচ যোগিদিগের অতীতাদি বিষয়ক প্রত্যক্ষ অবাহ্য অর্থাৎ অলৌকিক, অতএব উক্ত অব্যাপ্তিদোষ হইতে পারে না, কারণ লক্ষ্যে লক্ষণের অগমনেই অব্যাপ্তি-দোষ হইয়া থাকে ॥ ৯০ ॥

অথবা পক্ষান্তরে ইহাও বলা যায় যে, উক্ত লক্ষণদ্বারা যোগিদিগের প্রত্যক্ষও সংগৃহীত হইবে। কারণ কার্য্যমাত্রই সৎ ইহাই সাংখ্যাচার্য্যের সিদ্ধান্ত, সুতরাং এই মতে বস্তু বিনষ্ট হইলেও অতীতাবস্থাপন্ন হইয়া স্বকারণ প্রকৃতিতে লীন হইয়া থাকে, ভবিষ্যৎ বস্তুও অনাগতাবস্থাপন্ন হইয়া প্রকৃতিতেই

योगिन एव प्रधानसम्बन्धात् सर्वदेशकालादिसम्बन्ध इति नाव्यापकत्वदोषः ॥ ९१ ॥

ईश्वरप्रत्यक्षस्यालक्षणमित्यत आह —

**ईश्वरासिद्धेः ॥ ९२ ॥**

यदीश्वरसिद्धौ प्रमाणमस्ति, तदा तत्प्रत्यक्षचिन्ता उपपद्यते। तदेव तु नास्ति। क्षित्यादि सकर्तृकं कार्य्यत्वादिति प्रमाणमस्तीति

---

नातिरिक्तस्य ध्वंसस्य अनागतत्वेन, कारणे अवस्थानातिरिक्तस्य प्रागभावस्य च अनभ्युपगमादिति भावः। नन्वेवं कारणे सत्त्वेऽपि अतीतत्वादिना प्रतिबन्धादेव सम्बन्धस्यासम्भवः, अप्रतिबन्धे च माद्दशामपि सम्बन्धः स्यादिति शङ्कां निराकर्त्तुमाह—योगिन इत्यादि। योगिनामेवेत्येवकारो माद्दश-व्यवच्छेदार्थः। तथाच प्रधानसम्बन्धं प्रति योगजधर्म्मस्य सहकारित्वं कल्पनीयमित्याशयः। सर्व्वदेशकालसम्बन्ध इति देशकालादीनां सर्व्वेषामेव प्रधानाव्यतिरिक्तत्वादिति भावः। नाव्यापकत्वदोष इति, योगिनां प्रधानसम्बन्धेन सर्व्वसम्बन्धादतीतानागतव्यवहितादिविषयेष्व-पीन्द्रियसम्बन्धसम्भवात्तद्विषयेन्द्रियसम्बन्धजन्यत्वासम्भवनिबन्धनो निरुक्ताव्याप्तिदोष इत्यर्थः। एवञ्च सूत्रे लीनपदं व्यवहितादेरप्युपलक्षकमिति मन्तव्यम् ॥ ९१ ॥

अथैवं योगिप्रत्यक्षाव्याप्तिपरिहारेऽपि ईश्वरप्रत्यक्षस्यानित्यत्वाज्जन्यताघटितनिरुक्तप्रत्यक्षप्रमिति-लक्षणस्य तत्राव्याप्तिर्दुष्परिहरैवेति शङ्काया निरासकं सूत्रान्तरमवतारयितुमाह—ईश्वरेत्यादि। सूत्रतात्पर्य्यं विवृणोति—यदीत्यादिना। तत्प्रत्यक्षचिन्ता—ईश्वरप्रत्यक्षे लक्षणागमनचिन्ता, तदेव—ईश्वरे प्रमाणमेव नास्तीति, तथाच ईश्वरस्यैवासिद्धया तत्प्रत्यक्षाव्याप्तिशङ्का कथमपि न

লীন থাকে, ইহার অতিরিক্ত ধ্বংস বা প্রাগভাব সৎকার্য্যবাদীর মতে অসিদ্ধ, অতএব যোগজ ধর্ম্মানুগ্রহবশতঃ যোগিগণ আমাদিগের অপেক্ষা সমধিক সামর্থ্য লাভ করায় তাহাদেরই প্রকৃতির সহিত সম্বন্ধ হইয়া থাকে এবং তাহার ফলে ভূত, ভবিষ্যৎ, বর্ত্তমান, ব্যবহিত দূরবর্ত্তী প্রভৃতি সমস্ত বস্তুর সহিতই তাহাদের সন্নিকর্ষ সম্ভবপর হয়, সুতরাং উক্ত অব্যাপ্তিদোষ হইতে পারে না ॥ ৯১ ॥

উক্তরূপে যোগিদিগের অতীতাদিবিষয়ক প্রত্যক্ষের সংগ্রহ হইলেও ঈশ্বর প্রত্যক্ষে উক্ত লক্ষণের অব্যাপ্তি অপরিহার্য্য, যেহেতু ঈশ্বরপ্রত্যক্ষ অজন্য, এই আশঙ্কায় বলিতেছেন—যদি ঈশ্বরসিদ্ধিতে প্রমাণ থাকিত, তবেই

चेत्, स किं शरीरी अशरीरी वा इत्युभयथापि कर्तृत्वासम्भवात्, विशेषवादिनां कार्य्यत्वस्याभासत्वात्। एतदन्यत्र बहु प्रपञ्चितम् ॥९२॥

युक्त्यन्तरमाह—

मुक्तबद्धयोरन्यतराभावान्न तत्सिद्धिः ॥ ९३ ॥

स किं बद्धो वा मुक्तो वा। बद्धस्य धर्माधर्म्मयोगात् नेश्वरत्वम्।

---

त्वस्यास्यैति भावः। ईश्वरे प्रमाणमभ्युपगच्छतां वैशेषिकादीनां मतं दूषयितुमुत्थापयति—चित्यादीत्यादिना। उभयथापि—शरीरित्वे अशरीरित्वेऽपि, कर्त्तृत्वासम्भवात्—जगत्कर्त्तृत्वासम्भवात्, तथाहि—शरीरित्वे मादृशवदसर्व्वज्ञत्वाज्जगत्कर्त्तृत्वानुपपत्तेः, अशरीरित्वे च मुक्तात्मवत्कर्त्तृत्वाभावेन जगत्कर्त्तृत्वानुपपत्तिरिति भावः। विशेषवादिनां—वैशेषिकादीनां कार्य्यत्वस्य—सकर्त्तृकत्वसाधकत्वेनाभिमतस्य हेतोः आभासत्वात्—सकर्त्तृकत्वस्याप्यशरीरात्मस्वरूपं प्रति हेतुसद्भावेन सत्प्रतिपक्षितत्वात्। तथाच तेन हेतुना सकर्त्तृकत्वसाधनासम्भवान्न चित्यादिकर्त्तृत्वेनेश्वरसिद्धिरिति भावः॥ ९२॥

सूत्रान्तरमवतारयितुमाह—युक्त्यन्तरमिति, ईश्वरासिद्धौ युक्त्यन्तरमित्यर्थः। मुक्तबद्धयोरन्यतरस्मिन्नीश्वरत्वसम्भवरूपं सूत्रोक्तं हेतुं समर्थयितुं विकल्पयति—स किमित्यादिना। नेश्वरत्व-

তাহার প্রত্যক্ষে অব্যাপ্তির আশঙ্কা উপপন্ন হইত, কিন্তু ঈশ্বরসিদ্ধিতেই কোন প্রমাণ নাই, সুতরাং ঐ আশঙ্কাই ভিত্তিশূন্য। এস্থলে বৈশেষিক প্রভৃতি দার্শনিকগণ বলেন যে, কার্য্যমাত্রেরই একজন কর্ত্তা আছে, যেমন ঘটাদি কার্য্যের কর্ত্তা কুম্ভকার প্রভৃতি, সুতরাং কার্য্য ক্ষিতি অঙ্কুর প্রভৃতিরও একজন কর্ত্তা অবশ্যই স্বীকার্য্য, অথচ সেই কর্ত্তৃত্ব আমাদিগের মধ্যে কাহারও সম্ভবপর নহে, অতএব কার্য্যত্বহেতুক অনুমানই কর্ত্তৃত্বরূপে ঈশ্বরসিদ্ধির প্রমাণ। তদুত্তরে বক্তব্য এই যে, সেই কর্ত্তা ঈশ্বর শরীরী কি অশরীরী? উভয়থাই তাঁহার জগৎকর্ত্তৃত্ব সম্ভবপর নহে, কারণ শরীরী হইলে তিনিও আমাদের ন্যায় অসর্ব্বজ্ঞ হইয়া থাকেন, সুতরাং তাঁহার জগৎকর্ত্তৃত্ব অসম্ভব, অশরীরী হইলেও মুক্তাত্মার কর্ত্তৃত্বাভাববশতঃ তিনি জগৎকর্ত্তা হইতে পারেন না। সুতরাং বৈশেষিকাদির এই কার্য্যত্ব হেতুটি দুষ্ট হেতু, অর্থাৎ ঈশ্বরসাধক প্রকৃত হেতু নহে ॥ ৯২ ॥

ঈশ্বরের অসিদ্ধিবিষয়ে অন্য যুক্তিতে বলিতেছেন, বাদিদিগের স্বীকার্য্য ঈশ্বর

मुक्तस्य ज्ञानचिकीर्षाप्रयत्नाभावात् न कर्त्तृत्वमिति नेश्वरसिद्धिः। अथ अन्य एवासौ जीवन्मुक्त इति। एवं, तर्हि दृष्टान्ताभावात् असाधारणत्वम्॥ ९३॥

एतदेवाह—

**उभयथाप्यसत्करत्वम्॥ ९४॥**

'उक्तव्याख्यानमेतत्सूत्रम्॥ ९४॥

मिति धर्माधर्मयोगे सत्यस्मदादिभ्यो विशेषासम्भवादिति भावः। ज्ञानचिकीर्षाप्रयत्नाभावादिति अवच्छेदकशरीराभावेनेत्यादिः। न कर्त्तृत्वमिति, कर्त्तृत्वस्य चिकीर्षादिमत्त्वव्याप्यत्वादित्यर्थः। तथाच कर्त्तृत्वेनैव मुक्तात्मनो नेश्वरत्वसम्भव इत्याशयः। इति—हेतोः, सूत्रीयं तत्सिद्धिपदं व्याचष्टे—नेश्वरसिद्धिरिति। ननु मास्तु बद्धमुक्तयोरन्यतरस्मिन्नीश्वरत्वं तयोरन्य एव जीवन्मुक्ताख्यः कश्चिदात्मविशेष ईश्वरो भविष्यतीति शङ्कते—अथेत्यादिना। तामिमां शङ्कां परिहर्त्तुमाह—एवं तर्हीति, तादृशस्येश्वरत्व इत्यर्थः, दृष्टान्तासम्भवात्—तादृशेश्वरानुमाने व्याप्तिग्राहकदृष्टान्तासद्भावात्, असाधारण्यं—निश्चितसाध्यवदवृत्तित्वरूपहेत्वाभासविशेषत्वं हेतोरित्यर्थः। तथाच सिद्धं नानुमानमपीश्वरे प्रमाणमिति भावः॥ ९३॥

एतदेवेति—ईश्वरासिद्धत्वमेवेत्यर्थः। पूर्व्वसूत्रव्याख्यानेनैवैतत्सूत्रस्यापि व्याख्यानस्य ज्ञातप्रायत्वादाह—उक्तव्याख्यानमिति, उक्तं कथितं व्याख्यानं यस्य तदिति विग्रहः। तथाहि—उभयथापि—वाद्यभिमतस्येश्वरस्य मुक्तत्वे बद्धत्वे वापि, असत्करत्वं—असमर्थत्वञ्जगत्स्रष्ट्रादि-

বদ্ধ কি মুক্ত? যদি তিনি বদ্ধ হন, তবে তাঁহার ধর্ম্মাধর্ম্মও আছে বলিতে হইবে, তাহা হইলেই সাধারণ হইতে বিশেষত্ব থাকে না বলিয়া তিনি ঈশ্বর হইতে পারেন না। আর যদি তিনি মুক্ত হন, তবে মুক্তের জ্ঞানচিকীর্ষা ও প্রযত্নের অভাবনিবন্ধন কর্ত্তৃত্ব থাকিতে পারে না, সুতরাং পূর্ব্বোক্ত কর্ত্তৃত্ব হেতুদ্বারা ঈশ্বরত্ব সিদ্ধি হইতে পারে না। যদি বল, বদ্ধ ও মুক্ত হইতে অতিরিক্ত জীবন্মুক্তই ঈশ্বর, তাহা হইলে তাদৃশ ঈশ্বরানুমানের, ব্যাপ্তিগ্রাহক দৃষ্টান্তের অভাবনিবন্ধন ঈশ্বরানুমাপক হেতুতে অসাধারণত্ব (নিশ্চিত সাধ্যবদবৃত্তিত্ব) রূপ হেতুর দোষ থাকিয়া যায়, সুতরাং অনুমানও ঈশ্বরসাধক প্রমাণ হইতে পারে না॥ ৯৩॥

एवं, तर्हि 'स हि सर्ववित् सर्वस्य कर्त्ता' इत्यादिश्रुतिबाधः स्यादित्यत्राह—

**मुक्तात्मनः प्रशंसा, उपासासिद्धस्य वा ॥ ९५ ॥**

रागाद्यभावात् मुक्तात्मन इव मुक्तात्मनः, न तु मुक्तस्य, तस्य सङ्कल्पकर्त्तृत्वाद्यभावात्। तत्प्रशंसा विधिवाक्योत्तम्भनाय। 'उपासासिद्धस्य वा' इति उपासनया लब्धातिशयस्य योगिनोऽणिमादिसिद्धस्य, प्रशंसाभ्यासोत्तम्भनायेति ॥ ९५ ॥

---

कर्त्तृत्वं, तस्येति शेषः। मुक्तत्वे सृष्टिप्रयोजकाभिमानाद्यभावेन कर्त्तृत्वासम्भवात् बद्धत्वे च माहात्म्याद्यविशेषादिति भावः ॥ ९४ ॥

"नन्वेवमीश्वरप्रमापिकायाः श्रुतेः का गति" रित्याशङ्कायाः समाधानपरं सूत्रमवतारयितुमाह—एवं तर्हीति। ईश्वरस्यासिद्धत्व इत्यर्थः। प्रतिपाद्यस्याभाव एव तादृशश्रुतिबाधे हेतुः। सूत्रीयं मुक्तात्मपदमिव पदप्रक्षेपेण व्याख्यातुं सादृश्ये हेतुमाह—रागाद्यभावादिति। यथाश्रुतार्थकत्वे बाधकं दर्शयति—न त्वित्यादिना, तस्य—मुक्तस्य, सङ्कल्पकर्त्तृत्वाद्यभावादिति, तथाच कुतः सर्व्वकर्त्तृत्वेन मुक्तस्य प्रशंसा सम्भवेत्? यत्र यन्नास्ति तस्य तेन प्रशंसायाः सर्व्वथैवासम्भवादिति भावः। नन्वेतादृशप्रशंसायां को लाभ इत्यत आह—विधिवाक्योत्तम्भनायेति, विध्यर्थानुष्ठानप्ररोचनायेत्यर्थः। अणिमादिसिद्धस्येति, अणिमादीनामष्टैश्वर्य्याणां सिद्धं—सिद्धिर्यस्येति विग्रहः। प्रशंसेत्यनेनैवान्वय इति दर्शयितुमाह—प्रशंसेति। सापि किमर्थेत्यत आह—अभ्यासोत्तम्भनायेति, योगाभ्यासे दृढ़तासम्पादनायेति तदर्थः ॥ ९५ ॥

ইহাই বলিতেছেন—ঈশ্বর মুক্ত বা বদ্ধ হউন, কোনরূপেই জগৎ সৃষ্টি প্রভৃতির কর্ত্তা হইতে পারেন না ॥ ৯৪ ॥

যদি ঈশ্বর না থাকেন, তবে "তিনি সমস্ত জানেন ও সকলের সৃষ্টি করেন" ইত্যাদি শ্রুতিবাক্যগুলি বাধিত হইয়া পরে, এই জন্য বলিতেছেন (মুক্ত আত্মার সঙ্কল্পেও কর্ত্তৃত্ব নাই বিধায় সূত্রের মুক্তাত্ম পদের অর্থ বলিতে হইবে মুক্ত আত্মার সদৃশ) যাহারা রাগ দ্বেষ প্রভৃতির অভাবনিবন্ধন মুক্ত আত্মার তুল্য, উক্ত শ্রুতিদ্বারা তাহাদের প্রশংসা করা হইয়াছে। সেই প্রশংসার প্রয়োজন বিধিবাক্যার্থানুষ্ঠানে লোকের রুচি বৃদ্ধি করা। অথবা যাহারা উপাসনাদিদ্বারা অণিমাদি ঐশ্বর্য্যসম্পন্ন হইয়াছেন, উক্তশ্রুতিদ্বারা সেই লব্ধা-

चेतनाधिष्ठानं विना नाचेतनं प्रवर्त्तत इत्यतोऽपि नेश्वरसिद्धिरित्याह—

**तत्सन्निधानादधिष्ठातृत्वं मणिवत् ॥ ९६ ॥**

यथा प्रतिबिम्बितशरीरे मणौ चलति अचलति शरीरे 'शरीरं चलति' इत्यभिमानः, तथा तत्सन्निधानात् प्रकृतिप्रतिबिम्बितत्वात् आत्मनः प्रकृतेः कर्त्तृत्वं भोक्तृत्वमधिष्ठातृत्वमात्मनोऽभिमन्यते। तस्माच्चेतनोऽधिष्ठातेति भ्रान्तिरिति। तथा च—

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।
अहङ्कारविमूढ़ात्मा 'कर्त्ताहमिति' मन्यते ॥ ९६ ॥

---

ननु चेतनाधिष्ठानमन्तरेणाचेतनस्य प्रवृत्त्यदर्शनात् प्रधानाधिष्ठातृतयैव साङ्ख्याचार्य्यैरपीश्वरोऽवश्यमङ्गीकर्त्तव्य इत्याशङ्कायाः समाधानपरतया सूत्रान्तरमवतारयति—चेतनेत्यादिना। मणिवदिति दृष्टान्तं विशदीकृत्य सूत्रतात्पर्य्यं विवृणोति—यथेत्यादिना। प्रकृतिप्रतिबिम्बितत्वादात्मन इति तत्सन्निधानादित्यस्य विवरणम्। उपसंहरति—तस्मादित्यादिना। अत्र गीतातृतीयाध्यायसप्तविंशश्लोकं प्रमाणीकर्त्तुमाह—तथाचेति। श्लोके कर्त्तृपदमधिष्ठातादेरप्युपपादकं। तथाचाभिमानिकमधिष्ठातृत्वं पुरुष एव सम्भवतीति नास्ति तद्विलक्षणेश्वराङ्गीकारे प्रमाणमिति भावः ॥ ९६ ॥

---

তিশয় যোগের প্রশংসা করা হইয়াছে, তাহাদের প্রশংসা করার প্রয়োজন যোগাভ্যাসে লোকের দৃঢ়তাসম্পাদন ॥ ৯৫ ॥

চেতনের অধিষ্ঠান ভিন্ন অচেতন প্রবৃত্ত হয় না, এই জন্যও যে ঈশ্বর মানিতে হইবে না, ইহাই বলিতেছেন—যেমন শরীর মণিতে প্রতিবিম্বিত হইলে শরীর না চলিলেও মণি চলিলেই শরীর চলিতেছে বলিয়া মনে হয়, সেইরূপ আত্মা প্রকৃতিতে প্রতিবিম্বিত হইয়া প্রকৃতির কর্ত্তৃত্বভোক্তৃত্ব ও অধিষ্ঠাতৃত্ব নিজের বলিয়া মনে করেন (বস্তুতঃ কর্ত্তৃত্বাদি আত্মার ধর্ম্ম নহে) সুতরাং চেতন অধিষ্ঠাতা ইহা ভ্রান্তিমাত্র, গীতায়ও বলিয়াছেন—"কর্ম্মসকল প্রকৃতির গুণেই করিয়া থাকে, কিন্তু আত্মা অহঙ্কারবিমূঢ় হইয়া "আমিই কর্ত্তা" বলিয়া মনে করেন" ॥ ৯৬ ॥

यदि न चेतनाधिष्ठातृत्वं, मृतशरीरस्य आहारादिक्रियास्यादित्यत आह—

**विशेषकार्येऽपि जीवानाम् ॥ ৯৭ ॥**

वायुयुक्तो बुद्ध्यादिर्जीवः, न तु आत्मा जीवः। आहारादिविशेषकार्येऽपि जीवानामेव कर्त्तृत्वं, आत्मनोऽपरिणामित्वात् ॥ ৯৭ ॥

आत्मनि चेज्ज्ञानं नास्ति, कथं ज्ञानाय उपदेश इत्यत्राह—

**सिद्धरूपबोद्धृत्वाद्वाक्यार्थोपदेशः ॥ ৯৮ ॥**

उत्तरसूत्रस्थान्तःकरणस्येति पदमनुषञ्जनीयम्। वाक्यार्थोपदेशोऽन्तःकरणस्येत्यन्तमेकं सूत्रं वा। तेनायमर्थः। सिद्धरूपबोद्धृत्वात्

---

सूत्रान्तरमवतारयति—यदीत्यादिना। चेतनाधिष्ठातृत्वं—चेतने पारमार्थिकमधिष्ठातृत्वं। आहारादिक्रिया स्यादिति, निरुक्ताभिमानिकाधिष्ठातृत्वस्य तत्रापि सम्भवादिति भावः। सूत्रोपात्तस्य जीवपदस्यार्थमाह—वायुरित्यादिना। वायुयुक्तः—प्राणादियुक्तः, बुद्ध्यादिरित्यादिना अहङ्कारपरिग्रहः। षष्ठाध्यायवक्ष्यमाणे विशिष्टात्मरूपजीवेऽपि वस्तुगत्या कर्त्तृत्वाभावात्तस्य तज्जीवशब्दप्रतिपाद्यत्वं निषेधति—न त्वित्यादिना। जीवः एतत्सूत्रोपात्त जीवशब्दप्रतिपाद्यः, अतएव ( विशिष्टस्य जीवत्व ) मित्यादिषष्ठाध्यायसूत्रेण न विरोधः, जीवानामेव कर्त्तृत्वमिति, तथाच प्राणादिविशिष्टबुद्ध्यादेरभावादेव मृतशरीरे नाहारादिक्रियेति भावः ॥ ৯৭ ॥

सूत्रान्तरमवतारयितुं शङ्कते—आत्मनीत्यादिना। सूत्रं व्याख्यातुं सम्बन्धिपदाकर्षणं दर्शयति—उत्तरेत्यादिना। अनुषञ्जनीयं—सिंहावलोकितन्यायेन विवर्त्तनीयम्। सूत्रनिर्गलितार्थे—

চেতনে যদি বস্তুতঃ অধিষ্ঠাতৃত্ব না থাকে, তবে মৃত শরীরেরও আহারাদি ক্রিয়া হউক, এই আশঙ্কায় বলিতেছেন—প্রাণাদি বায়ুযুক্ত বুদ্ধ্যাদিই এই সূত্রের জীবশব্দবাচ্য, আত্মা নহে, আত্মার অপরিণামিত্বনিবন্ধন আহারাদি কার্য্যেও সেই জীবেরই কর্ত্তৃত্ব, সুতরাং প্রাণাদি বায়ুবিশিষ্ট বুদ্ধ্যাদিরূপ কর্ত্তা নাই বলিয়াই মৃত শরীরে আহারাদি ক্রিয়া হইবে না ॥ ৯৭ ॥

আত্মাতেই যদি বস্তুতঃ জ্ঞান না থাকে, তবে জ্ঞানের জন্য উপদেশ করিয়াছেন কেন? এই আশঙ্কায় বলিতেছেন—পরসূত্রের "অন্তঃকরণস্য" এই পদটির এই সূত্রে সিংহাবলোকিতন্যায় ক্রমে অধিকার করিতে হইবে, অথবা

तात्त्विकरूपबोद्धृत्वान्महतोऽन्तःकरणस्य वाक्यार्थोपदेशः । तत्प्रतिबिम्बितत्वाच्च पुरुषस्य बोद्धृत्वाभिमानः ॥ ९८ ॥

एतदेव स्पष्टयति—

**अन्तःकरणस्य तदुज्ज्वलितत्वाल्लोहवदधिष्ठातृत्वम् ॥ ९९ ॥**

अन्तःकरणस्य बुद्धौ पुरुषच्छायापत्त्या तच्चैतन्येनोज्ज्वलितस्य चेतनत्वाभिमानात् अधिष्ठातृत्वम् । 'लोहवत्' इति यथा आकर्षको लोहो निष्क्रियोऽपि सन्निधिमात्रेण आकर्षति ॥ ९९ ॥

---

अन्तःकरणस्य महत्त्वाभिधानन्तु कार्य्यकारणयोरभेदेन महदन्तःकरणयोरभेदप्रदर्शनार्थं । बोद्धृत्वाभिमान इति, तथाच वस्तुगत्या पुरुषस्य ज्ञानाभावेऽपि अन्तःकरणधर्म्मतया सिद्धस्य ज्ञानस्य अन्यतया तदर्थं शास्त्रोपदेशः सफल इति भावः ॥ ९८ ॥

सूत्रान्तरमवतारयितुमाह—एतदेवेति, पुरुषाधिष्ठातृत्वस्याभिमानिकत्वे पारमार्थिकाधिष्ठातृत्वं कस्य तदेवेत्यर्थः । सूत्रार्थं विवृणोति—अन्तःकरणस्येत्यादिना । चेतनत्वाभिमानादित्यन्तं तदुज्ज्वलितत्वादित्यस्य विवरणम् । तदभिधानञ्चान्तःकरणस्य घटाद्यचेतनान्तरेभ्यो वैलक्षण्यप्रदर्शनाय । अत्रैव दृष्टान्तं दर्शयति—लोहवदिति । न चाधिष्ठातृत्वस्यान्तःकरणधर्म्मत्वे प्रकृतिधर्म्मत्वपरेण पूर्व्वोक्तावस्थितग्रन्थेन विरोध इति शङ्कनीयं कार्य्यकारणयोरभेदेन प्रकृतेरन्तःकरणाव्यतिरिक्तत्वादिति ॥ ९९ ॥

---

"বাক্যার্থোপদেশে" অন্তঃকরণস্য এই পর্য্যন্তই এক সূত্র, অতএব সূত্রার্থ হইবে এই যে, "জ্ঞান প্রকৃত অন্তঃকরণেরই ধর্ম্ম, তাহার জন্যই বাক্যার্থের উপদেশ" সেই অন্তঃকরণে প্রতিবিম্বিত হয় বলিয়াই জ্ঞানবান্ বলিয়া আত্মার অভিমান হয় ॥ ৯৮ ॥

প্রকৃত অধিষ্ঠাতৃত্ব যদি আত্মাতে না থাকে, তবে কোথায় থাকিবে ? তাহাই স্পষ্ট করিতেছেন—পুরুষ বুদ্ধিতে প্রতিবিম্বিত হয় বলিয়া পুরুষের চৈতন্যদ্বারা উজ্জ্বলিত অন্তঃকরণের চৈতন্যাভিমান হয়, সুতরাং অচেতন হইলেও সেই চেতনায়মান অন্তঃকরণেরই প্রকৃত অধিষ্ঠাতৃত্ব। যেমন আকর্ষক লৌহ নিষ্ক্রিয় হইয়া ও সন্নিধিমাত্রেই আকর্ষণ করিয়া থাকে ॥ ৯৯ ॥

अनुमानलक्षणमाह—

प्रतिबन्धदृशः प्रतिबद्धज्ञानमनुमानम् ॥ १०० ॥

अविनाभावदर्शिनो व्याप्यज्ञानात् अनु व्यापकज्ञानमनुमानम्। अनेन अन्वयिव्यतिरेकि अन्वयव्यतिरेकि पूर्ववच्छेषवत्सामान्यतो दृष्टं चेति संगृहीतम्। वादिनामपि लक्षणानि अत्रैव अन्तर्हितानीति। तथा च—

क्रमप्राप्तमनुमानलक्षणप्रतिपादकं सूत्रमवतारयति—अनुमानेत्यादिना। अविनाभावदर्शिन इति प्रतिबन्धदृश इत्यस्य विवरणम्, व्याप्तिदर्शिन इति तदर्थः। अतिव्याप्तिवारकलक्षणमभिधातुं पूरयति—व्याप्यज्ञानादिति, तत्रापि पक्षे इत्यादिः, तथाच पक्षधर्म्मिकव्याप्यज्ञानादित्यर्थः। व्याप्यो व्याप्तिविशिष्टः, व्याप्तिश्च स्वाधिकरणवृत्त्यत्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं यथा-धूमसमानाधिकरणात्यन्ताभावाप्रतियोगिवह्निसामानाधिकरण्यं धूमे वह्निव्याप्तिस्तद्वान् धूमो वह्निव्याप्यः। व्यापकज्ञानमिति प्रतिबद्धज्ञानमित्यस्य विवरणम्, व्यापकश्च स्वाधिकरणवृत्त्यत्यन्ताभावाप्रतियोगी, यथा धूमाधिकरणवृत्त्यत्यन्ताभावाप्रतियोगी वह्निर्धूमव्यापकः। तथाच पक्षे पर्व्वतादौ वह्न्यादिव्याप्यधूमादिज्ञानानन्तरं यत् धूमादिव्यापकवह्न्यादिज्ञानं (तदाकारा बुद्धिवृत्तिः) उत्पद्यते तदनुमानं प्रमाणमिति फलितम्। अनुमितिस्तु तज्जन्यः पौरुषेयो बोध इति। अव्याप्तिशङ्कां निरसितुमाह—अनेनेति, एतल्लक्षणेनेत्यर्थः। अन्वयि—केवलान्वयि अत्यन्ताभावाप्रतियोगिसाध्यकानुमितिकरणमिति यावत्, यथा सर्व्वं अभिधेयं प्रमेयत्वादित्यादिस्थलीयानुमानं। व्यतिरेकि—केवलव्यतिरेकि अन्वयसहचारग्रहाजन्यव्यतिरेकि साध्यकानुमितिकरणमिति यावत्, यथा पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यादिस्थलीयानुमानम्। अन्वयव्यतिरेकि—अन्वयसहचारग्रहजन्यव्यतिरेकिसाध्यकानुमितिकारणं, यथा वह्निमान् धूमादित्यादिस्थलीयानुमानं। पूर्ब्ववत्—कारणलिङ्गकं यथा मेघोन्नतिदर्शनेन वृष्ट्यनुमानं।

যে যাহার অভাবে থাকে না, সে তাহার ব্যাপ্য ও সেই না থাকার নামই ব্যাপ্তি, এবং যাহার ব্যাপ্য হয়, সেই ব্যাপক, যেমন বহ্নি না থাকিলে ধূম থাকে না, এবিধায় ধূম বহ্নির ব্যাপ্য ও বহ্নির অভাবে না থাকার নামই ধূমে বহ্নির ব্যাপ্তি এবং ধূম বহ্নির ব্যাপ্য হয় বলিয়া বহ্নি ধূমের ব্যাপক, ঐরূপ ব্যাপ্তিজ্ঞানবিশিষ্ট ব্যক্তিদ্বয় পর্ব্বতাদিরূপ পক্ষে ব্যাপ্য ধূমাদির জ্ঞান হইলে পরে যে ব্যাপক বহ্ন্যাদির জ্ঞান অর্থাৎ বুদ্ধিবৃত্তি হয়, তাহাকে অনুমানরূপ প্রমাণ

**अनुमेयेन सम्बद्धं प्रसिद्धञ्च तदन्विते ।**
**तदभावे च नास्त्येव तल्लिङ्गमनुमापकम् ॥ १०० ॥**

**शब्दं लक्षयति—**

**आप्तोपदेशः शब्दः ॥ १०१ ॥**

**आप्तोपदेशः शब्दः, न तु आप्तेन कृतः, अपौरुषेयत्वाद्वेदस्य । अपौरुषेयत्वञ्च पञ्चमाध्याये 'न पौरुषेयत्वम्' इति सूत्रे प्रतिपादयिष्यामः ।**

---

शेषवत्—कार्य्यलिङ्गकं यथा—नदीवृद्ध्या वृष्ट्यनुमानं । सामान्यतो दृष्टं कार्य्यकारणभिन्नलिङ्गकं यथा—पृथिवीत्वेन द्रव्यत्वानुमानं । संगृहीतमिति, सर्व्वेषामेवैतेषां व्याप्यज्ञानजन्यव्यापकज्ञानत्वानपायादिति विभावनीयम् ।

वादिनामनुमानलक्षणमुदाहर्त्तुमाह—तथाचेति । अनुमेयेन—साध्येन सम्बद्धं—समानाधिकरणं तदन्विते—साध्यान्विते सपक्षे इति यावत, प्रसिद्धं—वृत्तिमत् तदभावे—तस्य साध्यस्याभावो यत्रेति व्युत्पत्त्या साध्याभाववति यन्नास्ति—यत् न वर्त्तते (तथाचैतेन व्याप्यत्वं लब्धं) तत् लिङ्गं अनुमापकं—अनुमितिजनकमिति यथाश्रुतार्थः । वस्तुतस्तु तादृशलिङ्गज्ञानमनुमापकमित्येव वाच्यं, अन्यथा अतीतानागतादिहेतुकस्थले अनुमित्यपलापापत्तेः । तथाचैतन्मतेऽपि व्याप्यज्ञानजन्यज्ञानत्वमेव लक्षणं फलितमित्यभिप्रायः । नन्वेवं लक्षणे फलितेऽपि तन्मते अनुमितेरेवैतल्लक्षणं, तथाच सांख्यमतेऽप्यस्यानुमितिलक्षणपरत्वमेवोचितमिति चेन्न, सांख्यमते बुद्धिवृत्तेरेव सर्व्वत्र प्रमाणत्वात् वाद्यभिमतव्याप्यज्ञानजन्यव्यापकज्ञानात्मकानुमितेर्बुद्धिवृत्त्यपरनामिकायाः प्रमाणरूपताया एव सांख्याचार्य्यसम्मतत्वात्, तज्जन्यपौरुषेयबोधस्यैवानुमितिरूपत्वाच्च । अतएव भाष्यकारेणाप्यनुमानलक्षणपरतयैव सूत्रमिदं व्याख्यातमित्यनुसन्धेयम् ॥ १०० ॥

বলে। এই অনুমানের লক্ষণদ্বারা কেবলান্বয়ি, কেবল ব্যতিরেকি, অন্বয়-ব্যতিরেকি, পূর্ব্ববৎ, শেষবৎ ও সামান্যতো দৃষ্ট—এই সকল অনুমানই সংগৃহীত হইল। এবং বাদিদিগের লক্ষণও ইহাতেই অন্তর্ভূত। তাহাদের লক্ষণ এই, যেই হেতু সাধ্যাধিকরণে ও নিশ্চিত সাধ্যবৎ পক্ষে থাকে এবং সাধ্যাভাবের অধিকরণে না থাকে, এইরূপ হেতুর জ্ঞানই অনুমিতির জনক। সুতরাং তাহাদের মতেও তাদৃশ অর্থাৎ ব্যাপ্য হেতুর জ্ঞানজন্য জ্ঞানের নামই অনুমিতি ॥ ১০০ ॥

शब्द इति कारणकथनं, फलं तु शब्दजन्यं ज्ञानं, शब्दः कार्य्ये कारणोपचारात्। शाक्यादिवाक्यानां वेदविरोधेन अयुक्तत्वात् आभासत्वम् ॥ १०१ ॥

---

शब्दप्रमाणप्रतिपादकं सूत्रमवतारयति—शब्दमित्यादिना। सूत्रे "शब्द" इति लक्ष्यनिर्देशः, शिष्टं लक्षणं, आप्तः—प्राप्तः युक्त इति यावत्, य उपदेशः—वाक्यार्थज्ञानं बुद्धिवृत्तिरिति यावत्, स शब्दः—शब्दाख्यं प्रमाणमिति सूत्रार्थः। आप्तेन कृत उपदेश इति मध्यपदलोपिसमासाशङ्कां निरस्यति—नत्वित्यादिना। आप्तेन—"स्वकर्म्मण्यभियुक्तो यः सङ्गद्वेषविवर्जितः। पूजितस्तद्विधैर्नित्यमाप्तो ज्ञेयः स तादृशः" इत्युक्तलक्षणेन, कृतः—सम्पादितः। अत्र हेतुमाह—अपौरुषेयत्वाद्वेदस्येति। तथाहि—"आप्तेन कृत" इत्यर्थकत्वे अपौरुषेयवेदार्थज्ञानस्याप्तसम्पादितत्वाभावात् प्रमाणत्वं न स्यादिति भावः। ननु वेदस्यापौरुषेयत्वमेवासिद्धमित्याशङ्कायामाह—अपौरुषेयत्वमित्यादि। सूत्रस्य प्रमितिलक्षणपरत्वशङ्कां निरसितुमाह—शब्द इतीति। कारणकथनं प्रमाणरूपलक्ष्यकथनं। तर्हि का प्रमितिरित्याकाङ्क्षायामाह—फलन्त्विति, शब्दजन्यं—निरुक्तबुद्धिवृत्तिरूपशब्दप्रमाणजन्यं, ज्ञानं—पौरुषेयो बोधः फलं—प्रमितिरित्यर्थः। नन्वेवं शब्दे कथं प्रमाणव्यवहार इत्यत आह—शब्दः कार्य्ये कारणोपचारादिति, प्रमाणशब्देन व्यवह्रियत इति शेषः। तथाहि "आयुर्घृत" मितिवत् प्रमाणशब्दस्य प्रमाणजनकपरतां स्वीकृत्य "प्रमाणं शब्द" इति व्यवह्रियत इति भावः। आप्तविशेषणस्य फलं दर्शयति—शाक्यादीत्यादिना। आदिपदेन श्वेतपटादीनां परिग्रहः। वाक्याना—तज्जन्यज्ञानानां, आभासत्वं—प्रमाणाभासत्वं नतु प्रमाणत्वमित्यर्थः ॥ १०१ ॥

শব্দপ্রমাণের লক্ষণ বলিতেছেন,—যুক্ত যে উপদেশ অর্থাৎ বাক্যার্থ জ্ঞানরূপ বুদ্ধিবৃত্তি তাহাকে শব্দপ্রমাণ বলে। আপ্তের কৃত উপদেশ শব্দের লক্ষণ হইতে পারে না, কারণ তাহা হইলে বেদের অপৌরুষেয়ত্ব-নিবন্ধন বেদার্থজ্ঞানে অব্যাপ্তি হয়, বেদের অপৌরুষেয়ত্ব পঞ্চমাধ্যায়ে "ন পৌরুষেয়ত্বম্" এই সূত্রে প্রতিপাদিত হইবে। শব্দ ইহাদ্বারা প্রমাণই বলা হইল, এই শব্দপ্রমাণজন্য পুরুষের বোধের নাম শব্দপ্রমিতি। শব্দে যে প্রমাণ ব্যবহার হয়, তাহা কেবল কার্য্যে কারণের উপচার করিয়া অর্থাৎ 'আয়ুর্ঘৃতং' এইস্থানে যেমন কার্য্য আয়ুতে কারণের উপচার করিয়া আয়ুর জনক অর্থে আয়ুঃশব্দ প্রযুক্ত হয়, সেইরূপ শব্দপ্রমাণ এইস্থলেও প্রমাণ শব্দটি প্রমাণ-জনক অর্থে প্রযুক্ত হয়। শাক্যাদি বাক্যার্থজ্ঞান বেদবিরুদ্ধবিষয়ক, সুতরাং অযুক্ত, অতএব প্রমাণাভাস বশতঃ প্রমাণ নহে ॥ ১০১ ॥

प्रकृतिपुरुषविवेकार्थं शास्त्रारम्भः । न च तयोः सिद्धौ प्रमाणमस्तीत्यत आह—

**उभयसिद्धिः प्रमाणात्तदुपदेशः ॥ १०२ ॥**

वक्ष्यमाणात् प्रमाणात् प्रकृतिपुरुषयोः सिद्धिर्ज्ञानम् । तस्मात्तद्विवेकार्थमुपदेशो युक्त इति ॥ १०२ ॥

किं तत् प्रमाणमित्यत्राह—

**सामान्यतो दृष्टादुभयसिद्धिः ॥ १०३ ॥**

प्रकृतेरप्रत्यक्षत्वात् यत्कार्य्यं तत् कारणगुणपूर्वकं, कार्य्यं च त्रिगुणात्मकमिति सामान्येन प्रकृतिसिद्धिः । आत्मनोऽप्रत्यक्षत्वेऽपि यत् संहतं, तत्परार्थमित्यसंहतः परः सिद्धः । वक्ष्यति च 'संहतपरार्थत्वात्' ॥ १०३ ॥

---

सूत्रान्तरमवतारयितुं भूमिकामारचयति—प्रकृतीत्यादिना । पूरयित्वा "तदुपदेश" इत्यस्य तात्पर्य्यमाह—तस्मादित्यादिना । अन्यत् स्पष्टम् ॥ १०२ ॥

सूत्रान्तरमवतारयितुमाह—किन्तत् प्रमाणमिति, येन प्रमाणेनोभयसिद्धिस्तादृशं प्रमाणं किमित्यर्थः । सामान्यतो दृष्टात्—पूर्व्वोक्तलक्षणादनुमानाख्यप्रमाणात् उभययोः प्रकृतिपुरुषयोः सिद्धिरिति सूत्रार्थः । तत्र प्रकृतिसाधकानुमानप्रकारं दर्शयति—यत्कार्य्यमित्यादिना । सामान्येन—सामान्यतो दृष्टानुमानेन, तथाचायं प्रयोगः—महत्तत्त्वं सुखदुःखमोहात्मकद्रव्योपादानकं कार्य्यत्वे सति सुखदुःखमोहात्मकत्वात् घटादिवत्, उपादानीभूतं तादृशं द्रव्यमेव प्रधान-

প্রকৃতিপুরুষের ভেদজ্ঞানের জন্যই এই শাস্ত্রের আরম্ভ, কিন্তু সেই সিদ্ধি বিষয়েইত প্রমাণ নাই, এই আশঙ্কায় বলিতেছেন,—বক্ষ্যমাণ প্রমাণ হইতেই প্রকৃতি ও পুরুষের সিদ্ধি আছে—সুতরাং তাহাদের জ্ঞানের জন্য উপদেশ অযুক্ত নহে ॥ ১০২ ॥

কোন্ প্রমাণের দ্বারা প্রকৃতি ও পুরুষের সিদ্ধি হইবে, তাহাই বলিতেছেন—যেহেতু প্রকৃতির প্রত্যক্ষ হয় না, অতএব "যে কার্য্য সেই কারণগুণপূর্ব্বক অর্থাৎ কারণের গুণ হইতেই কার্য্যের গুণ উৎপন্ন হয়, অথচ কার্য্যমাত্রই ত্রিগুণ, সুতরাং অবশ্যই ত্রিগুণ একটি কারণ আছে" এই সামান্যতোদৃষ্ট অনু-

प्रकृतेर्नित्यत्वात् प्रवृत्तिशीलत्वाच्च सर्व्वदा भोग इत्यनिर्मोक्षः स्यादित्यत आह—

**चिदवसानो भोगः ॥ १०४ ॥**

चित् आत्मा, तद्विवेकावसानो भोगः। यथा अनादिरपि प्रागभावो नश्यति, तथा नित्यायाः प्रकृतेर्विवेकज्ञानपर्य्यन्तः प्रसवः ॥

---

मिति भावः। पुरुषानुमानप्रकारं दर्शयति—यत् संहतमित्यादिना। अस्यार्थं प्रयोगः—प्रकृतिमहदादिकं परार्थं संहतत्वात्—( संहत्यकारित्वात् ) शय्यासनादिवत्। अथैवमनुमानेन परार्थत्वस्य सिद्धत्वेऽपि कथं पुरुषसिद्धिरित्यत आह—असंहतः परःसिद्ध इति, परस्याभावेन परार्थत्वस्यासम्भवादिति भावः। अनुमानसिद्धपरस्य संहतत्वे च नाभिप्रेतसिद्धिः, पुरुषस्यासंहतत्वादत आह—असंहत इति। ननु दर्शितानुमानेन परस्य सिद्धत्वेऽपि तस्यासंहतत्वे किं बीजमिति चेन्न तस्यापि संहतत्वे परार्थत्वापातात् एवमुत्तरोत्तरस्यापि संहतत्वं परार्थत्वापाते नानवस्थाप्रसङ्गात्। तथाच दर्शितानुमानेन योऽयमसंहतः परः सिद्धः स एव पुरुष इति भावः ॥ १०३ ॥

सूत्रान्तरावतरणिकामाह—प्रकृतेरित्यादिना। अविवेकमूलकस्य भोगस्य विवेकनाश्यतायां एव युक्ततया चित्पदस्य विवेकपरतया सूत्रं व्याचष्टे—चिदित्यादिना। तस्य आत्मनः विवेकेन प्रधानाद्यतिरिक्ततया ज्ञानेन अवसानं समापनं यस्येति विग्रहः। ननु भोगस्यानादित्वेऽपि कथं नाश इत्याशङ्का दृष्टान्तप्रदर्शनेन निराकरोति यथेत्यादिना। शङ्कते—अथेति एवं—अनादिरपि सावसानः, ननु भाव इति, एवमिति सम्बन्धः, तथाचाभावत्वस्यैवानादेर्नाशे प्रयोजकत्वात् अनादेः प्रागभावस्य नाशेऽपि भावभूतस्यानादेर्भोगस्य नाशासम्भव इति शङ्कार्थः।

মানদ্বারাই প্রকৃতির সিদ্ধি হইবে। এবং আত্মার প্রত্যক্ষ না হইলেও "যে সংহত সেই পরার্থ, সুতরাং সংহত প্রধান ও অবশ্যই পরার্থ—" এই সামান্যতো দৃষ্ট অনুমান হইতেই অসংহত পর অর্থাৎ পুরুষসিদ্ধ হইবে। ইহা "সংহতপরার্থত্বাৎ" এই সূত্রে বিশেষরূপে বলা হইবে ॥ ১০৩ ॥

প্রকৃতি নিত্য ও প্রবৃত্তিশীল, সুতরাং সর্ব্বদাই ভোগ হইতে থাকিবে, অতএব মুক্তি অসম্ভব এই আশঙ্কায় বলিতেছেন,—আত্মজ্ঞান হইলেই ভোগের অবসান হয়! যেরূপ প্রাগভাব অনাদি হইলেও বিনষ্ট হয়, সেইরূপ বিবেকজ্ঞান পর্য্যন্তই প্রকৃতি ভোগের সাধন করে, অর্থাৎ বিবেক জ্ঞান হইলেই অনাদি ভোগেরও নাশ হয়। অনাদি অভাব পদার্থের নাশ হইলেও অনাদিভাব

अथ अभाव एवं, न तु भाव इति न, अत्राभावत्वं न प्रयोजकं, अप्रध्वंसाभावेऽतथादर्शनात् । अथ यथादर्शनं व्यवस्था, अत्राप्येवम् ॥ १०४ ॥

यदि कर्त्तृ प्रधानं भोक्ता पुरुषः, अन्यकृतकर्मणोऽन्यो भोक्तेति स्यादित्यत आह—

**अकर्त्तुरपि फलोपभोगोऽन्नाद्यवत् ॥ १०५ ॥**

यथा सूपकारस्य अन्नादिकर्त्तृत्वमकर्त्तुरीश्वरस्य फलोपभोक्तृत्वं, तथा अत्रापि । अथोद्देश्यत्वेन कर्त्तृत्वमीश्वरस्य । अत्रापि आत्मोद्देश्यत्वेन प्रकृतेः प्रसव इति ॥ १०५ ॥

परिहरति—नेत्यादिना, अत—अनादेर्नाशे, अप्रध्वंसाभावे—न विद्यते ध्वंसो यस्य तादृशाभावे अत्यन्ताभावादाविति यावत्, अतथादर्शनात्—सत्यपि अभावत्वे नाशादर्शनात् । अत प्रध्वंसाभावादिति नञ्‌रहितः पाठः प्रामादिक एव, तस्य सादित्वेन तत्र व्यभिचारदर्शनस्य प्रकृतानुपयोगित्वात् । पुनः शङ्कते—अथेत्यादिना, यथादर्शनं—यथानुभवं व्यवस्थाकल्पनं । तथाच अभावत्वसत्त्वेऽपि यस्यानादेर्नाशो नानुभवसिद्धस्तत्राभावत्वस्य प्रतियोगितासम्बन्धेन नाशं प्रति प्रयोजकत्वं न कल्पते इत्यर्थः । परिहरतुमाह—अत्रेति, भोगनाशेऽपीत्यर्थः, एवं—यथादर्शनं व्यवस्था । तथाच प्रतियोगितासम्बन्धेनानादेर्नाशं प्रति भावत्वं अभावत्वं वा न तन्त्रं, परन्तु यस्य यदा नाशोऽनुभवसिद्धस्तदनुगुणं किमपि प्रयोजकं कल्पनीयमिति न काचिदनुपपत्तिरिति भावः ॥ १०४ ॥

कर्त्तृत्वभोक्तृत्वयोः सामानाधिकरण्यावश्यम्भावस्य निरासकं सूत्रमवतारयति—यदीत्यादिना । सूत्रतात्पर्यं विवृणोति—यथेत्यादिना, सूपकारस्य—पाचकस्य, ईश्वरस्य—सूपकारप्रभोः । अत्रापि

পদার্থের নাশ হয় না, ইহাও বলা চলে না, যেহেতু অনাদির নাশে প্রতিযোগিতে অভাবত্বের প্রয়োজকতা স্বীকার করা যায় না, কারণ অত্যন্তাভাবাদিতে অভাবত্ব সত্ত্বেও তাহাদের ধ্বংস হয় না । যদি অনুভব অনুসারে ব্যবস্থা হয়, তবে ভোগের নাশেও সেইরূপ ব্যবস্থা হইতে পারে ॥ ১০৪ ॥

যদি প্রকৃতিতে কর্ত্তৃত্ব ও পুরুষে ভোক্তৃত্ব থাকে, তবে অন্যকৃত কর্ম্মের ভোক্তা অন্য হইয়া পড়ে, এই আশঙ্কায় বলিতেছেন,—যেরূপ পাচকে পাক করে, পাচকের স্বামী পাক না করিয়াও সেই অন্ন ভোগ করে, সেইরূপ

व्यवहारसिद्धान्तमुक्त्वा स्वसिद्धान्तमाह—

**अविवेकाद्वा तत्सिद्धेः कर्त्तुः फलावगमः ॥१०६॥**

न पुरुषः कर्त्ता न भोक्ता, किन्तु महत्तत्त्वप्रतिबिम्बितत्वात् कर्त्तृत्वाभिमानः । 'अविवेकाद्वा' इति प्रकृतिपुरुषयोर्विवेकाग्रहात् । तत्सिद्धेः कर्त्तुः फलोपभोगाभिमानसिद्धेरिति ॥ १०६ ॥

प्रकृतिपुरुषयोः कर्त्तृभोक्तृभावेऽपि, तथा प्रकृतेः कर्त्तृत्वं अकर्त्तुरपि पुरुषस्य भोक्तृत्वम् । अथ मास्तु समवायसम्बन्धेन कृतेर्भोगसामानाधिकरण्यनियमः, किन्तु उद्देश्यतासम्बन्धेन भोगसामानाधिकरण्यनियमाङ्गीकारे नास्ति विरोध इति शङ्कते—अथेत्यादिना । प्रकृतेऽपि तद्वैषम्यं दर्शयित्वा शङ्कां निरसितुमाह—अत्रापीति । तथाच पुरुषेऽपि उद्देश्यत्वसम्बन्धेन प्रकृतेः कर्त्तृत्वस्य सत्त्वाद्भोक्तृनियमभङ्ग इति भावः ॥ ११५ ॥

सूत्रान्तरमवतारयति—व्यवहारेत्यादिना । सूत्रं व्याख्यातुं प्रथमं सांख्यसिद्धान्तं दर्शयति—न पुरुष इत्यादिना । सूत्रं व्याचष्टे अविवेकाद्वा—इतीत्यादिना । कर्त्तुः—कर्त्तृत्वाभिमानवतः पुरुषस्य । सूत्रे कर्त्तुः फलावगम इति, कर्त्तुः—प्रधानस्य फलावगमः—भोगादिरूपफलसिद्धिरित्यर्थः । तथाच सांख्यमते वास्तवभोगस्यापि प्रधानधर्म्मतया कृतिभोगयोर्व्यधिकरण्यमेव नास्तीति तन्निबन्धनदोषाशङ्का न लब्धास्पदेति भावः ॥ १०६ ॥

কর্ত্তা না হইয়াও প্রকৃতির কার্য্যের ভোগ করিয়া থাকে। যদি বল উদ্দেশ্যতা সম্বন্ধে পাচকের স্বামীতেও কর্ত্তৃত্ব আছে, তবে এস্থলেও পুরুষ উদ্দেশ্যেই প্রকৃতি কার্য্য করেন বলিয়া পুরুষের উদ্দেশ্যতা সম্বন্ধে কর্ত্তৃত্ব আছে, ( অতএব পুরুষের ভোগে কোনও বাধা নাই ) ॥ ১০৫ ॥

পূর্ব্ব সূত্রদ্বারা যে সিদ্ধান্ত বলিয়াছেন, তাহা ব্যবহারিক সিদ্ধান্ত, এই সূত্রদ্বারাই সাংখ্যাচার্য্যের নিজের সিদ্ধান্ত বলিতেছেন—পুরুষ কর্ত্তাও নহে, ভোক্তাও নহে, কিন্তু মহত্তত্ত্বে প্রতিবিম্বিত হয় বলিয়া পুরুষে কর্ত্তৃত্বের অভিমান হইয়া থাকে। প্রকৃতিপুরুষের ভেদজ্ঞান থাকে না বলিয়াই কর্ত্তৃত্বাভিমানিপুরুষের ভোগাভিমানও হইয়া থাকে, সুতরাং প্রকৃতিতেই বাস্তবিক ভোগের সিদ্ধি হইল। ফলে এখন ইহাই সিদ্ধান্ত হইল যে, বাস্তবিক কর্ত্তৃত্ব ও ভোক্তৃত্ব উভয়ই যখন প্রকৃতির ধর্ম্ম, তখন কর্ত্তৃত্বরহিত পুরুষে ভোগ হয় কিরূপে? এই আশঙ্কাই হইতে পারে না ॥ ১০৬ ॥

एतद्व्यतिरेकमाह—

**नोभयं च तत्त्वाख्याने ॥ १०७ ॥**

विवेकात्तत्त्वज्ञाने नोभयं न कर्त्तृत्वं न भोक्तृत्वमिति ॥ १०७ ॥

प्रमाणमुक्त्वा प्रमेयव्यवस्थामाह—

**विषयोऽविषयोऽप्यतिदूरादेर्हानोपादानाभ्यामिन्द्रियस्य ॥ १०८ ॥**

इन्द्रियस्य उपादानात् सम्बन्धात् विषयः। इन्द्रियस्य हानात् सम्बन्धाभावात् अविषयः। असम्बन्धश्च अतिदूरादेरयोग्यत्वात्। अतिदूरात् वियति पक्षी नोपलभ्यते, अतिसामीप्यात् लोचनस्था-

---

निरुक्तस्वसिद्धान्तस्य दृढ़ीकरणपरं सूत्रमवतारयति—एतद्व्यतिरेकमित्यादिना। एतयोः—वास्तवकर्त्तृत्वभोक्तृत्वयोः व्यतिरेकं—पुरुषे अभावम्। यावत्तत्त्वज्ञानं नोदेति तावदेवाभिमानिकं कर्त्तृत्वं भोक्तृत्वञ्च पुरुषे व्यवह्रियते, न तु वस्तुगत्या कर्त्तृत्वं भोक्तृत्वं वा पुरुषे तिष्ठतीति सूत्रतात्पर्य्यम ॥ १०७ ॥

प्रमेयव्यवस्थाप्रदर्शनपरं सूत्रमवतारयितुमाह—प्रमाणमित्यादि। वस्तुगतिमनुरुध्य हानोपादानाभ्यामिति पदषट्कपदार्थं व्युत्क्रमेण विभज्य सूत्रं व्याचष्टे—इन्द्रियस्येत्यादिना। विषयः—प्रत्यक्षविषयः, अविषयः—प्रत्यक्षाविषयः, पदार्थो भवतीति शेषः। अतिदूरादेरित्यस्य प्रयोज्यमध्याहार्य्यं दर्शयति—असम्बन्धश्चेति। इन्द्रियासम्बन्धस्येत्यर्थः, अतिदूरादेरिति, अतिदूरत्वादेरित्यर्थः। अतिदूरत्वात् आदिपदेन येषां दोषाणामुपादानं तेभ्यश्च इन्द्रियासम्बन्धात् येषां अनुपलब्धिः तानि विशिष्य दर्शयति—अतिदूरादित्यादिना। शब्दध्वनिरित्यादिना समानाभिहारादिपरिग्रहः, यथोक्तं कारिकया—

---

বাস্তব কর্ত্তৃত্ব ও ভোক্তৃত্ব যে পুরুষে নাই, তাহাই বলিতেছেন—বিবেকবশতঃ প্রকৃত তত্ত্বজ্ঞান হইলে কর্ত্তৃত্ব বা ভোক্তৃত্ব কিছুই পুরুষে থাকে না, যে পর্য্যন্ত তত্ত্বজ্ঞান না হয়, সে পর্য্যন্ত কর্ত্তৃত্ব ও ভোক্তৃত্বের অভিমান থাকে মাত্র ॥ ১০৭ ॥

প্রমাণ বলিয়া এখন প্রমেয়ের ব্যবস্থা বলিতেছেন—ইন্দ্রিয়ের সম্বন্ধ হইলেই পদার্থ প্রত্যক্ষের বিষয় হয় এবং ইন্দ্রিয়ের সম্বন্ধ না হইলেই প্রত্যক্ষের বিষয়

ञ्जनं, व्यवधानात् कुड्यस्थं वस्तु, मनोऽनवस्थानात् शोकादिग्रस्तस्य पार्श्वस्थवस्त्वग्रहणं, सौक्ष्म्यादणोः, अभिभवात् मार्दङ्गध्वनिना शङ्खध्वनिरित्यादिः ॥ १०८ ॥

प्रकृतेः कथमनुपलब्धिरित्यत आह—

**सौक्ष्म्यादनुपलब्धिः ॥ १०९ ॥**

दुरूहत्वं सौक्ष्म्यं न तु अणुत्वं, प्रकृतेर्विभुत्वात् ॥ १०९ ॥

---

अतिदूरात् सामीप्यादिन्द्रियघातान्मनसोऽनवस्थानात् ।
सौक्ष्म्याद्व्यवधानादभिभवात् समानाभिहाराच्च ॥ इति ।

तथाच वस्तुनः सत्त्वेऽपि दोषवशादनुपलब्धेः सिद्धत्वान्नानुपलब्धिः प्रकृत्यादीनामभावसाधिकेति भावः ॥ १०८ ॥

सूत्रान्तरमवतारयति—प्रकृतेरित्यादिना । दुरूहत्वञ्चात्र प्रत्यक्षप्रयोजकशान्त्याद्यवस्थाराहित्यं निरवयवद्रव्यत्वं वेति मन्तव्यम् ॥ १०९ ॥

---

হয় না। অতি দূরত্বাদি দোষে অযোগ্য হইলেই তাহাতে ইন্দ্রিয়ের সম্বন্ধ হয় না, যেমন পক্ষী আকাশে উঠিলে অতি দূরত্বনিবন্ধন প্রত্যক্ষের বিষয় হয় না, অতি সামীপ্যনিবন্ধন নেত্রের কজ্জল প্রত্যক্ষের বিষয় হয় না, ব্যবধানবশতঃ গৃহের বস্তু প্রত্যক্ষের বিষয় হয় না, মনের ব্যস্ততানিবন্ধন সমীপস্থিত বস্তুও শোকাভিভূত ব্যক্তির প্রত্যক্ষের বিষয় হয় না, সূক্ষ্মতাবশতঃ পরমাণু প্রত্যক্ষের বিষয় হয় না, এবং মৃদঙ্গধ্বনি দ্বারা অভিভূত শঙ্খধ্বনি প্রত্যক্ষের বিষয় হয় না। আদি পদদ্বারা সমানাভিহার অর্থাৎ তুল্যরূপ বস্তুর সংমিশ্রণাদির পরিগ্রহ করিতে হইবে, যেমন জলাশয়ে বৃষ্টির জল পড়িলে মিশ্রিত হয় বলিয়া প্রত্যক্ষের বিষয় হয় না ইত্যাদি ॥ ১০৮ ॥

প্রকৃতির প্রত্যক্ষ হয় না কেন ? তাহাই অতঃপর বলিতেছেন—সূক্ষ্মতাবশতঃই প্রকৃতির প্রত্যক্ষ হয় না, কিন্তু এই সূক্ষ্মত্ব দুরূহত্ব অর্থাৎ নিরবয়ব দ্রব্যত্ব অণুত্ব নহে, যে হেতু প্রকৃতি বিভু পদার্থ ॥ ১০৯ ॥

कथं तर्हि प्रकृतिव्यवस्था इत्यत आह—

**कार्य्यदर्शनात्तदुपलब्धेः ॥ ११० ॥**

यथा घटदर्शनात्परमाणुज्ञानं, तथा त्रिगुणकार्य्यदर्शनात् प्रकृतिज्ञानम् ॥ ११० ॥

ब्रह्मकारणं जगदिति केचित्, परमाणुकारणमित्यन्ये, प्रकृतिकारणमिति वृद्धा इति संशयमाह—

**वादिविप्रतिपत्तेस्तदसिद्धिरिति चेत् ॥ १११ ॥**

तदसिद्धिः प्रधानासिद्धिः ॥ १११ ॥

---

ननु अभावादपि सप्तमरसादीनामनुपलब्धिर्भवेदिति प्रकृतेरप्यनुपलब्धिरभावादेव कथं न कल्प्यतामित्याशङ्कायाः समाधानपरं सूत्रमवतारयितुं पृच्छति—कथमित्यादिना। प्रकृतिज्ञानं प्रकृतेरनुमानम्, अनुमानप्रकारस्तु पूर्व्वमेव प्रदर्शितः ॥ ११० ॥

प्रकृतिपरीक्षणाय पूर्व्वपक्षसूत्रमवतारयति—ब्रह्मकारणमित्यादिना। ब्रह्म कारणं यस्येति विग्रहः, एवमन्येऽपि। केचित्—वैदान्तिकाः। अपरे—वैशेषिकादयः। सूत्रे वादिविप्रतिपत्तेरिति, वादिनां वैशेषिकादीनां विप्रतिपत्तेः—विरुद्धाप्रतिपत्तिर्ज्ञानं येन तस्मादिति व्युत्पत्त्या विरुद्धकोट्युपस्थापकशब्दादित्यर्थः ॥ १११ ॥

---

প্রকৃতির যে হেতু প্রত্যক্ষ হয় না, অতএব তাঁহার সিদ্ধি হয় কিরূপে ? কারণ অভাববশতঃ তাহার উপলব্ধি হয় না, ইহাও বলা যায়, এই আশঙ্কায় বলিতেছেন—যেরূপ ঘটদর্শনে পরমাণুর অনুমান হয়, সেইরূপ ত্রিগুণ-কার্য্যদর্শনে ত্রিগুণ প্রকৃতিরও অনুমান হইবে ॥ ১১০ ॥

বৈদান্তিকগণ বলেন, ব্রহ্মই জগতের উপাদান কারণ, বৈশেষিক প্রভৃতিরা বলেন, পরমাণুই জগতের উপাদান কারণ, সাংখ্যাচার্য্য বলেন, প্রকৃতিই জগতের উপাদান কারণ, সুতরাং কারণরূপে প্রধানের সিদ্ধি হইতে পারে না, এই সংশয়ই বলিতেছেন—বাদিদিগের বিপরীত কোটির উপস্থাপক শব্দ আছে বলিয়াই প্রধানের সিদ্ধি হইবে না ॥ ১১১ ॥

सिद्धान्तमाह—

तथाप्येकतरदृष्ट्यानान्यतरसिद्धेर्नापलापः ॥ ११२ ॥

यदि वादिविप्रतिपत्तिमात्रेण पक्षासिद्धत्वं, विपक्षेऽपि विप्रतिपत्तिरस्तीति कथं तत्सिद्धिः। यदि व्याप्यज्ञानात् व्यापकज्ञानस्य अविनाभावित्वात् पक्षसिद्धिः, ममापीत्थमिति न कार्य्यात् अनुमानापलापः ॥ ११२ ॥

कार्य्यात् कारणमस्तु, तच्च प्रकृतिरिति कथमित्यत आह—

त्रिविधविरोधापत्तेः ॥ ११३ ॥

त्रिविधो गुणः, सत्त्वरजस्तमांसि। तद्विरोधः तच्छून्यं जगत् भवेत्। न चैवं दृश्यत इति ॥ ११३ ॥

सिद्धान्तमिति, उक्तशङ्कायाः सिद्धान्तमित्यर्थः। सूत्रतात्पर्य्यं विवृणोति—यदीत्यादिना। वादिविप्रतिपत्तिमात्रेणेति एकतरदृष्ट्येत्यस्य विवरणम्। पक्षासिद्धत्वमिति, पक्षस्य—जगतः प्रकृत्युपादानकत्वरूपाभ्युपगतसिद्धान्तस्य असिद्धत्वं—प्रमाज्ञानविषयत्वाभावः, विपक्षेऽपीति तदेत्यादिः, तत्सिद्धिः—तस्य विपक्षस्य वादिनां जगतः ब्रह्मोपादानकत्वादिसिद्धान्तस्येति यावत् सिद्धिः प्रमाज्ञानविषयत्वम्। तथाच विप्रतिपत्तिसद्भावमात्रेण न कस्यापि पक्षस्यासिद्धिर्भवितुमर्हतीति भावः। परैः स्वपक्षसिद्धये यत्प्रयोजकमभिधीयते तदस्माकमपि समानमिति दर्शयति—यदीत्यादिना ॥ १२ ॥

प्रकृतिकारणत्वसमर्थनपरं सूत्रान्तरमवतारयति—कार्य्यादित्यादिना। सूत्रं व्याचष्टे—त्रिविध इत्यादिना। तच्छून्यं जगद्भवेदिति, यदि त्रिगुणं प्रधानं कारणं न स्यादिति शेषः।

ইহার সিদ্ধান্ত বলিতেছেন—যদি বাদিদিগের বিপ্রতিপত্তিদ্বারাই জগতের প্রকৃত্যুপাদান পক্ষের অসিদ্ধি হয়, তবে ব্রহ্মোপাদানাদি পক্ষেরও বিরুদ্ধ প্রতিপত্তি আছে বলিয়া কিরূপে সিদ্ধি হইবে? সুতরাং কেবল বিরুদ্ধ প্রতিপত্তিদ্বারা কোন পক্ষেরই অসিদ্ধি হইতে পারে না। ব্যাপ্যজ্ঞান হইতে ব্যাপকজ্ঞানের অব্যভিচারিত্বনিবন্ধন যদি পক্ষসিদ্ধি হয়, তবে সাংখ্যমতেও দর্শিত কার্য্য দর্শনজনিত অনুমানের অপলাপ হইবে না ॥ ১১২ ॥

কার্য্য হইতে কারণের সিদ্ধি হইলেও সেই কারণ যে প্রকৃতি, তাহার নিশ্চয়

कार्य्यस्य किं सत उत्पत्तिः असतो वेति संशयं निरस्यति—

**नासदुत्पादो नृशृङ्गवत् ॥ ११४ ॥**

असदेकस्वभावं नृशृङ्गादि, सदेकस्वभावमाकाशादि, सदसत्-स्वभावा घटादय इति कथं नृशृङ्गतुल्यत्वम्। तत् न, घटादीनां प्रागभावसमयेऽसत्त्वम्, नृशृङ्गादीनां सर्वदाऽसत्त्वमिति द्वयोः को विशेषः। घटादीनां जन्मदर्शनं विशेष इति चेत्, एतदेव चिन्त्यते, एतदेवोत्तरमित्यहो नैपुण्यम् ॥ ११४ ॥

---

अत्रायमभिप्रायः—कारणे ये ये गुणा वर्त्तन्ते, कार्य्येऽपि ते ते गुणा एव दृश्यन्ते, यथा मृदादि गुणास्तज्जन्यघटादौ अत एवोक्तं "कारणगुणाः कार्य्यगुणानारभन्ते" इति। एवञ्च त्रिगुण-रहितं ब्रह्म यदि जगदुपादानं स्यात्तदा जगदपि त्रिगुणरहितं स्यात्। तस्माज्जगतस्त्रिगुणत्वा-देव सिद्धं त्रिगुणं प्रधानं जगत्कारणमिति ॥ ११३ ॥

सत्कार्य्यवादसमर्थनपरं सूत्रमवतारयितुमाह—कार्य्यस्येत्यादि, सतः—उत्पत्तेः प्रागपि विद्यमानस्य, उत्पत्तिः—अभिव्यक्तिः, असतः—उत्पत्तेः प्रागविद्यमानस्य। "नृशृङ्गवत्—नरशृङ्गतुल्यस्यासत उत्पादो न सम्भवतीति" सूत्रार्थः। अत्र नैयायिकादीनामारम्भवादिना-माशङ्कां दूषयितुमुपन्यस्यति—असदित्यादिना। असदेकस्वभावम्—असत्त्वेनैव प्रतीतिविषयता-वत्, सदेकस्वभावं सत्त्वेनैव प्रतीतिविषयतावत् सदसत्स्वभावाः—उत्पत्तेः प्राक् सत्त्वेन उत्पत्तेः पश्चादसत्त्वेन च प्रतीतिविषयाः। कथं नृशृङ्गतुल्यत्वमिति, घटादीनामुत्पत्तेः प्रागसत्त्वेऽपि असदेकस्वभावत्वाभावेन सादृश्यासम्भवादिति भावः। परिहरति—तन्नेत्यादिना। प्रागभावसमये—उत्पत्तेः प्राक्। को विशेष इति, तथाच असत्त्वेन सादृश्यं नास्ति

---

কি? এই আশঙ্কায় বলিতেছেন, প্রকৃতি যদি জগতের উপাদান কারণ না হয়, তবে জগতে সত্ত্ব, রজঃ ও তমঃ এই তিনটি গুণ থাকিতে পারে না, অথচ জগৎ ত্রিগুণপরিশূন্য বলিয়া প্রতীত নহে ॥ ১১৩ ॥

উৎপত্তির পূর্ব্বেও যে সৎ এরূপ কার্য্যেরই উৎপত্তি হয় অথবা উৎপত্তির পূর্ব্বে যে থাকে না এরূপ কার্য্যেরই উৎপত্তি হয়, এই সংশয়ের নিরাস করিতেছেন—"মনুষ্যশৃঙ্গের ন্যায় অসতের উৎপত্তি হইতে পারে না।" মনুষ্য শৃঙ্গাদি সর্ব্বদাই অসৎ, আকাশাদি সর্ব্বদাই সৎ, এবং ঘটাদি উৎপত্তির পূর্ব্বে অসৎ ও উৎপত্তির পরে সৎ, সুতরাং ঘটাদি নৃশৃঙ্গের তুল্য হয় কি প্রকারে?

सत्कार्य्ये न्यायमाह—

उपादाननियमात् ॥ ११५ ॥

कारणसम्बन्धात् कार्य्यस्य। सम्बन्धश्च विद्यमानयोरेव। अन्यथा सर्वदा सर्वत्र कार्य्योत्पत्तिः स्यात् ॥ ११५ ॥

---

विरोध इति भावः। पुनरारम्भवादिनां शङ्कां दर्शयितुमाह—घटादीनामिति जन्मदर्शनं— प्रागसतामपि तेषामुत्पत्तिदर्शनं विशेषः नृशृङ्गसत्त्वाद् घटादीनामसत्त्वस्य वैलक्षण्यसम्पादकम्। परिहरति—एतदेवेत्यादिना। एतदेव—घटादीनामसतां जन्मदर्शनमेव, चिन्त्यते—असताम् उत्पत्तिः सती वा अभिव्यक्तिरेव स्यात इति सन्दिह्यते। अहो नैपुण्यमिति.सोल्लुण्ठनोक्तिरियं। सन्दिग्धमुत्तरं भवितुं नार्हतीति भावः॥ ११४ ॥

सत्कार्य्ये इति, उत्पत्तेः प्रागपि कार्य्यस्य सत्त्वे इत्यर्थः। न्यायं—युक्तिम्। कारण-सम्बन्धात् कार्य्यस्येति उपादाननियमादित्यस्य विवरणम्, कारणे कार्य्यसम्बन्धस्य नियतत्वादिति तदर्थः, नासदुत्पाद इति पूर्व्वेण सम्बन्धः। कारणे कार्य्यं सम्बन्धस्य नियतत्वेऽपि कथं नास-दुत्पाद इत्यत आह—सम्बन्धश्च विद्यमानयोरेवेति, तथाच उत्पत्तेः प्राक् कार्य्यस्यासत्त्वे समवायिकारणे तस्य सम्बन्धासम्भवात्तदुत्पादो न भवितुमर्हतीति भावः। कारणे कार्य्य-सम्बन्धनियतत्वस्यानङ्गीकारे दोषं दर्शयितुमाह—अन्यथेति। उपादान कारणे कार्य्यं सम्बन्धं विनापि कार्य्योत्पादस्वीकारे इत्यर्थः। कार्य्योत्पत्तिः स्यात् सर्व्वकार्य्योत्पत्तिः स्यात्, इदं कार्य्यमत्र भवति, इदं न भवति तत्र नियामकाभावादिति भावः। नियतसम्बन्धस्वीकारे तु यत्कार्य्यस्य यत्कारणे यदा सम्बन्धः स्यात् तत्कार्य्यमेव तत् 'कारणसत्त्वे तदा समुत्पद्यते नान्यदिति न सर्व्वदा सर्व्वत्र सर्व्वकार्य्योत्पत्तिप्रसङ्ग इति ध्येयम् ॥ ११५ ॥

---

এই আশঙ্কাও এস্থলে হইতে পারে না, কারণ ঘট উৎপত্তির পূর্ব্বে অসৎ আর নৃশৃঙ্গাদি সর্ব্বদা অসৎ হইলেও উভয়ের অসত্ত্বের কোনও বৈলক্ষণ্য নাই, ঘটাদির জন্ম দেখা যায়, আর নৃশৃঙ্গাদির জন্ম দেখা যায় না, ইহাই বিশেষ একথা বলাও নিতান্তই নিপুণতা অর্থাৎ মূর্খতা, কারণ অসৎ ঘটাদির জন্ম হয় কি না ইহাই বিচার্য্য বিষয়, ইহাকেই সিদ্ধান্ত বলিয়া গ্রহণ করিলে মূর্খতা ভিন্ন আর কি বলা যায় ॥ ১১৪ ॥

কার্য্য যে উৎপত্তির পূর্ব্বেও সৎ এ বিষয়ে যুক্তি বলিতেছেন—উপাদান কারণে অবশ্যই কার্য্যের নিয়ত সম্বন্ধ স্বীকার করিতে হইবে, নচেৎ সর্ব্বদাই

एतदेवाह—

**सर्व्वत्र सर्व्वदा सर्व्वासम्भवात् ॥ ११६ ॥**

व्यक्तम् ॥ ११६ ॥

ननु उपादानकारणत्वाविशेषेऽपि यस्य यत् शक्यं, तदेव तत् करोति। नहि तन्तुर्घटस्य कारणं भवति, कुतः सर्व्वसम्भव इत्यत आह—

**शक्तस्य शक्यकरणात् ॥ ११७ ॥**

शक्तस्य शक्तिः शक्यविषया वा न वा? शक्यविषया चेत्, शक्यस्य सत्त्वं वाच्यम्। नेति पक्षे तन्तुतो घटोत्पत्तिस्तदवस्था ॥ ११७ ॥

एतदेवेति—उपादाननियतत्वमेवेत्यर्थः। व्यक्तमिति, सर्व्वत्र सर्व्वदा सर्व्वासम्भवादुपादाननियम आवश्यक इति तात्पर्य्यं स्पष्टमित्यर्थः। उपादानानियमे च सर्व्वत्र सर्व्वदा सर्व्वं सम्भवेदिति भावः ॥ ११६ ॥

सूत्रान्तरमवतारयति—नन्वित्यादिना। सूत्रतात्पर्य्यमाख्यातुं विकल्पयति—शक्तस्येत्यादिना। शक्तस्य—शक्तिमत्तया अनुमतस्य, शक्तिः—कार्य्यजननयोग्यं विजातीयं सामर्थ्यम्, शक्यविषया—कार्य्यसम्बद्धा, शक्यस्य—कार्य्यस्य, सत्त्वम्—उत्पत्तेः प्रागपि वर्त्तमानत्वम्, वाच्यमिति,

সর্ব্বত্র সমস্ত কার্য্যের উৎপত্তি হইতে পারে, অথচ উভয় বস্তু বিদ্যমান থাকিলেই সম্বন্ধ হইতে পারে, নচেৎ নহে, সুতরাং সেই সম্বন্ধের অনুরোধেই উৎপত্তির পূর্ব্বেও কার্য্যকে সৎ বলিতে হইবে ॥ ১১৫ ॥

উপাদানে কার্য্যের সম্বন্ধ নিয়ম যে স্বীকার করিতে হইবে তাহাই বলিতেছেন—সর্ব্বত্র সর্ব্বদা সমস্ত বস্তু হয় না বলিয়াই উক্ত উপাদান নিয়ম স্বীকার করিতে হইবে ॥ ১১৬ ॥

আচ্ছা উপাদান কারণত্বদ্বারা কোন বিশেষ না থাকিলেও যে কার্য্য যাহার নিষ্পাদন-যোগ্য, সেই তাহা করিয়া থাকে, সুতরাং তন্তু ঘটের কারণ হইবে না, অতএব সর্ব্বদা সর্ব্বসম্ভবই বা হইবে কি প্রকারে? এই আশঙ্কায়

अपरं न्यायमाह—

**कारणभावाच्च ॥ ११८ ॥**

कार्य्यकारणयोरैकत्वात्। घटाकारेण परिणतोऽपि मृद्रूपतां न जहाति। न च सदसतोरैकत्वम्। यदि द्वयोरैकत्वं, मृत्पिण्डे-

---

अन्यथा असता सम्बन्धासम्भवेन उत्पत्तेः प्राक् शक्तेः कार्य्यसम्बद्धत्वं न सम्भवेदिति भावः। नेति पक्षे—शक्तेः कार्य्यसम्बद्धत्वाभावपक्षे, तदवस्थैति तन्तुतः पट एवोत्पद्यते न घट इत्यत्र नियामकाभावादिति भावः। तथाच शक्तस्य शक्यकरणादपि शक्तेः सम्बन्धान्यथानुपपत्त्या कार्य्यं उत्पत्तेः प्रागेव सदिति सूत्रार्थः फलितः ॥ ११७ ॥

अपरमिति—सत्कार्य्यवाद इत्यादिः, न्यायं—युक्तिं। "कारणभावा" दित्यस्यार्थमाह—कार्य्यकारणयोरैकत्वादिति, तथा च सूत्रे कार्य्यस्येति पूरणीयमित्यभिप्रायः। कार्य्यकारणयोरैकत्वमेव विशद्य दर्शयितुमाह—घटेत्यादि। ननु कार्य्यकारणयोरैकत्वेऽपि कथं सत्कार्य्यसिद्धिरित्याशङ्कायामाह—न च सदसतोरैकत्वमिति, तथाच सतः कारणस्याभेदानुरोधेनाप्यवश्यं कार्य्येण सता भवितव्यमिति भावः। असदारम्भवादी शङ्कते—यदीत्यादिना, द्वयोः—कार्य्यतदुपादानकारणयोः मृत्पिण्डेनापि—घटरूपेणापरिणतेनापीत्यर्थः, तत्राहरणं—मृत्पिण्डकार्य्यघट-

---

বলিতেছেন—শক্তিশালী বলিয়া অভিমত কারণের শক্তি কার্য্যে সম্বদ্ধ কি না ? যদি কার্য্যে সম্বদ্ধ হয়, তবে উৎপত্তির পূর্ব্বেও কার্য্যের বর্ত্তমানতা অবশ্যই স্বীকার করিতে হইবে, অন্যথা সৎ ও অসতের সম্বন্ধ না হওয়ায় উৎপত্তির পূর্ব্বে কার্য্যে শক্তির সম্বন্ধ সর্ব্বথাই অসম্ভব হইয়া পরে, আর যদি শক্তি কার্য্যে সম্বদ্ধ না হইয়াই কার্য্য উৎপাদন করে, তবে তন্তু হইতে ঘটোৎপত্তির আপত্তি পূর্ব্ববৎই থাকিয়া যায়, কারণ তন্তুর শক্তি পটই জন্মাইবে, ঘট জন্মাইবে না, এরূপ নির্দ্ধারণের কোনও যুক্তি থাকে না। অতএব শক্তিমৎকারণ কার্য্য করে বলিয়াও উৎপত্তির পূর্ব্বে কার্য্য সৎ বলিতে হইবে ॥ ১১৭ ॥

সৎকার্য্যবাদে আরও যুক্তি বলিতেছেন—মৃত্তিকা ঘটরূপে পরিণত হইলেও নিজের মৃত্তিকাত্ব পরিত্যাগ করে না, সুতরাং কার্য্য ও কারণের অভিন্নত্বই প্রতিপন্ন হইতেছে, এই কার্য্য কারণের অভিন্নত্ববশেও সৎকার্য্যবাদ স্বীকার করিতে হইবে, কারণ,—কার্য্য সৎ না হইলে কোনরূপেই সৎ কারণের অভিন্ন হইতে পারে না, সৎ ও অসতের একত্ব সর্ব্বথাই যুক্তিপ্রমাণবিরুদ্ধ। এস্থলে

नापि जलाहरणं कर्त्तव्यम्। भवेदेवं, यदि अत्यन्ताभेदः स्यात्, भेदाभेदपक्षे तु न कश्चिद्दोष इति। तथा च—

असत्त्वान्नास्ति सम्बन्धः कारणैः सत्त्वसङ्गिभिः।
असंबद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः॥

---

कार्य्यं जलाहरणमित्यर्थः, कर्त्तव्यमिति, किन्तु न क्रियत इति शेषः। तथाच क्रियाविशेषनिष्पादनशक्तिसद्भावासद्भावाभ्यामेव कार्य्यकारणयोर्नाभिन्नत्वं भवितुमर्हतीति प्रश्नार्थः। परिहरति—भवेदेवमित्यादिना। एवं—घटरूपकार्य्यादभिन्ने मृत्पिण्डे घटात् स्याज्जलाहरणक्रियानिष्पादनप्रसक्तिः, अत्यन्ताभेदः—कार्य्योत्पादनकारणयोः सर्व्वथैवाभिन्नत्वं।

भेदाभेदपक्षे—कारणे अव्यक्तरूपेण कार्य्यस्याभिन्नत्वं व्यक्तरूपेण च भिन्नत्वं इत्येतां मते, न कश्चिद्दोष इति, एकस्मिन्नपि अवस्थाभेदेन भावाभावयोः समावेशस्य सिद्धत्वाद् येन रूपेण कारणे कार्य्यस्याभिन्नत्वं, तेन रूपेण कार्य्येऽपि जलाहरणशक्तेरभावेनोक्तदोषस्यानवकाशात् इति भावः। तथाच सत्कार्य्यवादिसांख्याचार्य्यैरपि निरुक्तभावाभावपक्षस्यैव स्वीकृतत्वात्तन्मतेऽपि न कश्चिद्दोष इति तात्पर्य्यम्।

सत्कार्य्यवादे वृद्धसम्मतिं दर्शयितुं कारिकामुत्थापयन्नाह—तथाचेति। असत्त्वादिति कार्य्याणामुत्पत्तेः प्रागिति शेषः, सत्त्वसङ्गिभिः—सत्त्वसंसर्गवद्भिः सत्त्वाश्रयैरिति यावत् कारणैः सम्बन्धः—असतः कार्य्यस्य संसर्गः न अस्ति—न सम्भवति, सम्बन्धे उभयोर्व्विद्यमानत्वस्यैव तन्त्र-

অসৎ কার্য্যবাদীর আশঙ্কা এই যে, কার্য্য এবং কারণ যদি এক হয়, তবে ঘট-দ্বারা যেমন জলাহরণক্রিয়া নিষ্পন্ন হয়, মৃৎপিণ্ডদ্বারাও তেমন তাহা নিষ্পন্ন হইতে পারে, কিন্তু তাহাতে দেখা যায় না, সুতরাং ক্রিয়াবিশেষ সম্পাদন-শক্তির বৈলক্ষণ্য বশতঃই কার্য্য কারণ এক হইতে পারে না। ইহার উত্তরে বক্তব্য এই যে, যদি কার্য্য এবং কারণ সর্ব্বথাই অভিন্ন হইত, তবে ঐরূপ আশঙ্কা হইতে পারিত সত্য, কিন্তু পরিণামবাদিগণও কার্য্য কারণের সর্ব্বথা অভিন্নত্ব স্বীকার করেন না, পরন্তু তাঁহারাও ভেদাভেদবাদী, অর্থাৎ কারণে অব্যক্তাবস্থাপন্ন কার্য্যের অভেদ ও ব্যক্তাবস্থাপন্ন কার্য্যের ভেদ স্বীকার করেন। এই ভেদাভেদ পক্ষে কোনই দোষ নাই, কারণ এক বস্তুতেও অবস্থাভেদে ক্রিয়াবিশেষনিষ্পাদন-শক্তির বৈলক্ষণ্য সর্ব্ববাদিসিদ্ধ। যে অবস্থায় কার্য্য কারণের অভিন্ন, সে অবস্থায় কার্য্যেও ঐ বিশেষ শক্তি তিরোহিত হইয়া থাকে।

नासतो विद्यते भावो नाभावो विद्यते सतः।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ ११८ ॥

शङ्कते—

**भावे भावयोगश्चेन्न वाच्यम् ॥ ११९ ॥**

यदि भावे कारणे भावस्य कार्य्यस्य विद्यमानस्य योग उत्पत्तिः, तदा 'भविष्यति घटः, उत्पद्यते, नष्टः' इति व्यपदेशो न स्यात् ॥११९॥

त्वादिति भावः। ननु मास्तु सम्बन्धस्ततः किमित्याशङ्कयामाह—असम्बन्धस्येत्यादि, असम्बन्धस्य—उपादानकारणेन संसर्गरहितस्य उत्पत्तिम् इच्छतः असत्कार्य्यवादिन इति शेषः, न व्यवस्थितिः—तन्त्वादिभ्यः पटादय एवोत्पद्यन्ते न घटादय इत्येवंरूपा व्यवस्था न स्यादिति। विनिगमकाभावादिति भावः।

अत्र गीताद्वितीयाध्यायषोड़शश्लोकमपि प्रमाणीकर्त्तुमाह—नासत इति। असतः—उत्पत्तेः प्रागविद्यमानस्य अलीकस्य खपुष्पादिवद्विकल्पितस्येति यावत्, भावः—उत्पत्तिः न अस्तीति शेषः। सतः—विद्यमानस्य घटादेः अभावः—विनाशः न अस्ति, ( केवलं तिरोभाव एव भवतीति भावः ) अनयोः उभयोः सदसतोः, अन्तः—तत्त्वं, तत्त्वदर्शिभिः—विवेकिभिः दृष्टः—निर्णीतः सत्सत्त्वेन असदसत्त्वेन च निर्द्धारितमित्यर्थः ॥ ११८ ॥

सत्कार्य्यवादे पूर्व्वपक्षसूत्रमवतारयितुमाह—शङ्कत इति। भावे भावयोगश्चेदित्यंशं विवृ-

---

সৎকার্য্যবাদে বৃদ্ধদিগেরও সম্মতি আছে যথা—কার্য্য যদি উৎপত্তির পূর্ব্বে অসৎ হয়, তবে অসম্বন্ধনিবন্ধন সৎকারণের সহিত সম্বদ্ধ হইতে পারে না, কারণ সম্বন্ধে উভয়ের বিদ্যমানতাই অপেক্ষিত। আর যাহারা অসম্বদ্ধ কার্য্যের উৎপত্তি ইচ্ছা করেন, তাহাদের মতে তন্তু হইতে পটই উৎপন্ন হইবে, ঘট উৎপন্ন হইবে না, এইরূপ ব্যবস্থা হইতে পারে না।

ভগবদ্গীতায়ও বলিয়াছেন—উৎপত্তির পূর্ব্বে যে বস্তু অসৎ অর্থাৎ আকাশ-কুসুমের ন্যায় যাহা অলীক, তাহার উৎপত্তি ও সৎ বস্তুর বিনাশ নাই, ( পরন্তু সত্তেরই আবির্ভাব ও তিরোভাব হইয়া থাকে ) তত্ত্বদর্শী ব্যক্তিরাই এই সৎ ও অসতের তত্ত্ব নির্দ্ধারণ করিয়াছেন। ১১৮।

এইস্থানে অসৎকার্য্যবাদিগণ পূর্ব্বপক্ষ করেন এই যে, যদি সৎকারণে

सिद्धान्तमाह—

**न अभिव्यक्तिनिबन्धनौ व्यवहाराव्यवहारौ ॥१२०**

यथा शुक्लपटस्य मलिनस्य क्षालनादिना शुक्लत्वमभिव्यज्यते, तथा कुलालव्यापारात् घटोऽभिव्यज्यते, मुद्गराभिघातात् तिरोभूयते इष्टञ्च, अभिव्यक्तिः पीड़नेन तिलेषु तैलस्य, दोहनेन गवि पयसः, अवघातेन धान्ये तण्डुलानामित्यादि। तस्मादभिव्यक्तिनिबन्धनौ शब्दप्रयोगार्थक्रियाभेदाविति ॥ १२० ॥

---

शेति—यदीत्यादिना। न वाच्यमित्यंशं विवृणोति तदेत्यादिना। उत्पद्यते नष्ट इत्यनयोर्घट इत्यनेन सम्बन्धः। न स्यादिति, सतः प्रागभावोत्पादविनाशासम्भवादिति भावः। अस्य सूत्रस्य "न भावे भावयोग"श्चेदित्येतावन्मात्रः भाष्यसम्मतः पाठः ॥ ११९ ॥

सिद्धान्तमिति, पूर्व्वसूत्रोक्तपूर्व्वपक्षस्य सिद्धान्तमित्यर्थः। सूत्रं व्याख्यातुमादौ दृष्टान्तप्रदर्शनपूर्व्वकमभिव्यक्तिं विशदयति—यथेत्यादिना। तत्र "मुद्गराभिघातात्तिरोभूयत" इत्यंशः प्रसङ्गादुक्त इति मन्तव्यम्, तत्सिद्धान्तस्य परसूत्रेणैव वक्ष्यमाणत्वात्। प्रत्यक्षतोऽप्यभिव्यक्तिं दर्शयितुमाह—दृष्टञ्चेति, अस्य च इत्यादीत्यनेनान्वयः। सूत्रार्थमुपसंहरति—तस्मादित्यादिना। अभिव्यक्तिः—आविर्भावः वर्त्तमानावस्थेति यावत्, तन्निबन्धनौ—तत्प्रयोज्यौ शब्दप्रयोगार्थक्रियाभेदाविति व्यवहाराव्यवहारावित्यस्य विवरणम्। तथाच यदा घटादेरभिव्यक्तिर्भवति तदैव घट उत्पद्यते घट उत्पद्यत इत्यादि शाब्दव्यवहारो भवति जलाहरणादिरूपक्रियाभेदश्च घटादिना क्रियते, कारणव्यापारस्तु वर्त्तमानावस्थालक्षणपरिणाममेव कार्य्यस्य जनयति न तु सदतिरिक्ता काचिदुत्पत्तिरस्तीति भावः ॥ १२० ॥

সৎকার্য্যের উৎপত্তি স্বীকার করা হয়, তবে "ঘট হইবে" "ঘট হইতেছে" ও "ঘট বিনষ্ট হইয়াছে" ইত্যাদি ব্যবহার হইতে পারে না, কারণ সদ্বস্তুর প্রাগভাব উৎপত্তি বা বিনাশ অসম্ভব ॥ ১১৯ ॥

উক্ত পূর্ব্বপক্ষে সিদ্ধান্ত বলিতেছেন—যেমন ক্ষালনাদিদ্বারা মলিন শুভ্র বস্ত্রের শুক্লত্বের অভিব্যক্তি হয়, সেইরূপ কুলালব্যাপারদ্বারাও ঘটের অভিব্যক্তি হয় এবং মুদ্গরাঘাতে তিরোভাব হয়। দেখাও যায়, পীড়নদ্বারা তিলে তৈলের, দোহনদ্বারা ধেনুতে দুগ্ধের ও অবঘাতদ্বারা ধান্তে তণ্ডুলের অভিব্যক্তি হয়। অতএব ঘটাদির উৎপত্তি ব্যবহার ও জলাহরণাদিক্রিয়াকারিত্ব

अभिव्यक्तिनिबन्धनोत्पत्तिः, किंनिबन्धनो विनाश इत्यत आह—

**नाशः कारणलयः ॥ १२१ ॥**

मुद्गराभिघातात् घटस्य कारणे लयः, तन्निबन्धनो नाश इति शब्दार्थक्रियाभेदौ । यदि लयः, पुनरुद्भवो दृश्येत, न च दृश्यत इति चेत्? मूढैर्न दृश्यते, विवेचकैर्दृश्यत एव । तथा हि, तन्तौ नष्टे मृद्रूपेण परिणामः, मृदश्च कार्पासवृक्षरूपेण परिणामः, तस्य पुष्पफलतन्तुरूपेण परिणामः । एवं सर्व्वे भावाः ॥ १२१ ॥

---

सूत्रान्तरमवतारयति—अभिव्यक्तीत्यादिना । उत्पत्तिः—उत्पत्तिव्यवहारः । विनाशः—विनाशादिव्यवहारः । सूत्रतात्पर्य्यं विवृणोति—मुद्गरेत्यादिना । तथाच यदा कारणे लीयते तदैव नश्यतीत्यादिव्यवहारभाग्भवतीत्यर्थः । अत्र शङ्कते—यदीत्यादिना । परिहरति—मूढैरित्यादिना । मूढैः—अविवेकिभिः । लीनकार्य्यस्यापि पुनरुद्भवो दृश्यत इति यदुक्तं तदेव विशदयति—तथाहीत्यादिना ।

योगदर्शनकृता च लीनकार्य्यस्य पुनरभिव्यक्तिः प्रत्यभिज्ञापत्त्या न स्वीक्रियते, परेषां प्रागभावावस्थे वानागतावस्थायाः अभिव्यक्तिहेतुत्वकल्पनाच्च तन्मते नाभिव्यक्तेरापत्तिरपि,

রূপ বৈলক্ষণ্যের প্রতি অভিব্যক্তিই কারণ, অভিব্যক্তির অতিরিক্ত কোনও উৎপত্তি নাই, যাহা সতের হইতে পারিবে না ॥ ১২০ ॥

আচ্ছা উৎপত্তি ব্যবহার অভিব্যক্তিদ্বারা হইলেও বিনাশাদি ব্যবহারের প্রতি কি কারণ হইবে? এই আশঙ্কায় বলিতেছেন—মুদ্গরাভিঘাতে ঘটের স্বীয় কারণে লয় অর্থাৎ তিরোভাব হয়, সেই লয় বশতঃই বিনাশাদি ব্যবহার হইয়া থাকে। "আচ্ছা যদি লয়ই হয় (বিনাশ হয় না) তবে সেই লীন বস্তুর পুনরায় উৎপাদ হইতে দেখা উচিত ছিল, কিন্তু তাহাত দেখা যায় না" এই আশঙ্কাও ঠিক নহে, কারণ মূর্খ ব্যক্তিরাই লীন বস্তুর পুনরুৎপাদ নিরীক্ষণ করে না, কিন্তু সূক্ষ্মদর্শিগণ নিরীক্ষণ করিয়াই থাকেন। সূক্ষ্মরূপে অনুসন্ধান করিলেই দেখা যায়, তন্তু বিনষ্ট হইয়া মৃত্তিকারূপে পরিণত হয়, সেই মৃত্তিকা কার্পাসবৃক্ষরূপে, সেই কার্পাস বৃক্ষ পুষ্পরূপে, সেই পুষ্প ফলরূপে, ও সেই ফল পুনরায় তন্তুরূপে পরিণত হয়। (সুতরাং লীন বস্তুর যে পুনরায়

किमभिव्यक्तिः सती असती वा। सती चेत्, नित्यं कार्य्योपलब्धिः स्यात्। असती चेत्, सत्कार्य्यहानिः। तस्या अपि अभिव्यक्तिरन्या तस्या अप्यन्या इत्यनवस्था इत्यत आह—

**पारम्पर्य्यतोऽन्वेषणा बीजाङ्कुरवत् ॥ १२२ ॥**

भवतु अभिव्यक्तिसहस्रं, तथापि न दोषोऽनादित्वात् बीजाङ्कुरवदिति ॥ १२२ ॥

---

एतद्भाष्यकारस्यापि तत्रैव सम्मतिरित्यनुसन्धेयम्। प्रागभावव्यवहारस्तु कार्य्यस्यानागतावस्थयेति मन्तव्यम् ॥ १२१ ॥

सूत्रान्तरमवतारयितुं विकल्पयति—किमित्यादिना। सत्कार्य्यहानिः स्यादिति, तथात्वे अभिव्यक्तेरेवासत्कार्य्यत्वापत्तेरिति भावः। ननु अभिव्यक्तेरपि अभिव्यक्तिः कल्पनीया, तत एव च न सर्व्वदा कार्य्योपलब्धिः स्यादित्याशङ्कायां तत्राप्यनवस्थारूपं दोषान्तरं दर्शयति—तस्या अपीत्यादिना। "पारम्पर्य्यतः—परम्परारूपेण अन्वेषणा—अभिव्यक्तेरनुधावनं न दोषायेति शेषः" इति सूत्रार्थं हृदि कृत्वा तात्पर्य्यं वर्णयति—भवत्वित्यादिना। दोषाभावे हेतुमाह—अनादित्वादिति। तथा च अनाद्यनवस्थायाः प्रामाणिकत्वादेव न दोष इति भावः। अत्र दृष्टान्तमाह—बीजाङ्कुरवदिति, यदि च बीजाङ्कुरस्थलीयक्रमिक-परम्परानवस्थातोऽभिव्यक्तिस्थलीयैककालीनपरम्परानवस्थाया वैजात्यमस्ति—तथापि यथा बीजाङ्कुरस्थलीयानवस्था प्रामाणिकी तथैवाभिव्यक्तिस्थलीयेयमनवस्थापि प्रामाणिकीति प्रामा-

---

উৎপত্তি দেখা যায় না ইহা ঠিক নহে) অন্যান্য ভাব পদার্থের উৎপত্তি-বিনাশাদি ব্যবহারও এই দৃষ্টান্তেই নির্দ্ধারিত হইবে ॥ ১২১ ॥

যাহা হউক, উৎপত্তি ব্যবহারের হেতু যে অভিব্যক্তি তাহা সৎ কি অসৎ? যদি সৎ হয়, তবে সর্ব্বদাই কার্য্যের উপলব্ধি হইতে পারে, আর যদি অসৎ হয়, তবে সৎকার্য্যের অর্থাৎ কার্য্যমাত্রই যে সৎ এই সিদ্ধান্তের হানি হইয়া পড়ে, কারণ অভিব্যক্তিরূপ অসৎকার্য্য স্বীকার করিলেই সেই সিদ্ধান্ত রক্ষা পায় না। যদি অভিব্যক্তিকে সৎ স্বীকার করিয়া সর্ব্বদা কার্য্যের উপলব্ধি বারণের জন্য সেই অভিব্যক্তির অভিব্যক্তি স্বীকার করা যায়, তবে সেই অভিব্যক্তিরও অভিব্যক্তি স্বীকার করিতে হয়, আবার সেই অভিব্যক্তির অভিব্যক্তি স্বীকার করিতে হয়। এরূপ ভাবে অনবস্থা হইয়া পড়ে, এই

युक्त्यन्तरमाह—

उत्पत्तिवद्वाऽदोषः ॥ १२३ ॥

किमुत्पत्तिरुत्पद्यते न वा । उत्पद्यते चेत्, तस्या अप्युत्पत्तिरिति अनवस्था । नोत्पद्यते चेत्, किमसत्त्वात् नित्यत्वाद्वा । यदि असत्त्वात्, कदाचिदप्युत्पत्तिर्नास्तीति सर्व्वदानुपलम्भः स्यात् । अथ नित्यत्वात्, सर्व्वदा कार्य्योत्पत्तिः स्यात् । अथोत्पत्तेः स्वयमेवोत्पत्तिरूपत्वात् किमुत्पत्त्यन्तरकल्पनयेति, तर्हि अभिव्यक्तेरपि अभिव्यक्तिरूपत्वात् किमभिव्यक्त्यन्तरकल्पनयेति तुल्यम् । तत्र यस्तव सिद्धान्तः सोऽस्माकमपि ॥ १२३ ॥

बीजात् प्रभवन्ति बीजान्यन्यानि वै तत" इति विष्णुपुराणवचनात् बीजाङ्कुरप्रवाहस्यादिसर्गावधिकत्वेन तत्रानवस्थैव नास्तीति दृष्टान्तासम्भव इति वाच्यं तावतापि जन्मकर्म्माद्यनवस्थाया दृष्टान्तसम्भवादिति ॥ १२२ ॥

युक्त्यन्तरमिति पूर्व्वसूत्रावतारकविकल्पोत्तरे इत्यर्थः । सूत्रतात्पर्य्यन्तु निगदव्याख्यानेन वृत्तिग्रन्थे नोपवर्णितम् । तथाच "यश्चोभयोः समो दोषः परिहारश्च यः समः । नैकस्तत्रानुयोग्यः स्यात्तादृगर्थविनिर्णये" इति स्थितम् ॥ १२३ ॥

আশঙ্কায় বলিতেছেন—পরম্পরাক্রমে সহস্র সহস্র অভিব্যক্তি স্বীকার করিতে হয় বলিয়া অনবস্থা হইলেও অনাদিত্বনিবন্ধন সেই অনবস্থা দোষাবহ নহে, যেরূপ বীজ হইতে অঙ্কুর কি অঙ্কুর হইতে বীজ? এই অনাদি অনবস্থা সকলেরই স্বীকার্য্য ॥ ১২২ ॥

অভিব্যক্তির অভিব্যক্তি স্বীকারাদিতে যে দোষ নাই, এ বিষয়ে অন্যপ্রকার যুক্তিও দেখাইতেছেন—আরম্ভবাদীদিগের উৎপত্তির উৎপত্তি আছে কি না? যদি থাকে, তবে সেই উৎপত্তির এবং তদুৎপত্তির উৎপত্তির ও উৎপত্তি স্বীকার করিতে হয় বলিয়া তাহাদের মতেও অনবস্থা। আর যদি উৎপত্তির উৎপত্তি না হয়, তবে সেই অনুৎপত্তি উৎপত্তির অসত্ত্বনিবন্ধন কি নিত্যত্বনিবন্ধন? যদি অসত্ত্বনিবন্ধন হয়, তবে কদাচিৎও উৎপত্তি থাকিতে পারে না বলিয়া সর্ব্বদাই বস্তুর অনুপলব্ধি হইতে পারে। আর যদি নিত্যত্বনিবন্ধন উৎপত্তির

प्रकृतिकार्य्याणामन्योऽन्यं साधर्म्यमाह—

हेतुमदनित्यं सक्रियमनेकमाश्रितं लिङ्गम् ॥१२४॥

हेतुमत्—कारणवत् । अनित्यं—विनाशि । सक्रियं—उपात्तं देहं त्यजत्, पृथिवी शरीरादयश्च स्पन्दन्ते । अनेकं—पुरुषभेदात् । आश्रितं—स्वकारणे । लिङ्गं—स्वकारणे लयं गच्छतीति ॥ १२४ ॥

सूत्रान्तरमवतारयति—प्रकृतीत्यादिना । सूत्रघटकं पदं व्याचष्टे—हेतुमदित्यादिना । विनाशि—नाशप्रतियोगि तिरोभावीति यावत् । आविर्भावित्वस्य तु हेतुमदित्यनेनैव लाभ इति मन्तव्यम् । तृतीयं सक्रियपदं परिस्पन्दवदित्यर्थकं बुद्ध्यादीनां तत् सक्रियत्वं कथमित्याकाङ्क्षायामाह—उपात्तं देहं त्यजदिति, त्यजदित्यन्तं हेतुगर्भविशेषणं देहान्तरमाददानमित्यादेरप्युपलक्षकं, बुद्ध्यादिकमिति शेषः, तथाच गृहीतं देहं त्यजत् देहान्तरञ्चाददानं बुद्ध्यादिकं सक्रियमित्यर्थः । दृष्टकार्य्ये परिस्पन्दवत्त्वं दर्शयितुमाह—पृथिवीत्यादि, परिस्पन्दन्त इति, प्रत्यक्षसिद्धमिति शेषः । एवञ्च प्रधाने परिणामलक्षणक्रियासत्त्वेऽपि परिस्पन्दाभावान्न तत्र सक्रियत्वमतिव्याप्तम् । अनेकत्वमत्र न स्वजातीयानेकव्यक्तिकत्वं प्रकृतावतिव्याप्तेः, किन्तु पुरुषादिभेदेन भिन्नत्वं, तदेव दर्शयितुमाह—अनेकं पुरुषभेदादिति, तथाच महदादिकं सर्व्वमेव प्रतिपुरुषं भिन्नमित्यर्थः । स्वकारणे—अवयवादौ, आश्रितं वृत्तिमत् । अवश्य कार्य्याकारणयोरभेदेऽपि "इह वने तिलकाः" इतिवत् कथञ्चिद्भेदविवक्षया आश्रयाश्रयिभावः स्वीकार्य्य इति मन्तव्यम् । लिङ्गपदस्यानुमापकत्वार्थकत्वे प्रकृतेरपि पुरुषानुमापकत्वात्तत्रातिव्याप्तिः स्यादतोऽर्थान्तरमाह—स्वकारण इत्यादिना । तथाच सूत्रे कार्य्यमित्यध्याहार्य्य कार्य्यं हेतुमदनित्यमित्यादिरूपः सूत्रार्थः कार्य्यः । ततश्च हेतुमत्त्वादिकं कार्य्याणामन्योन्यं साधर्म्य-

উৎপত্তি না হয় তবে সর্ব্বদাই কার্য্যের উৎপত্তি থাকিতে পারে। যদি বল উৎপত্তি স্বয়ংই উৎপত্তিস্বরূপ, সুতরাং তাহার আবার উৎপত্তি কল্পনায় প্রয়োজন কি? তবে অভিব্যক্তিও স্বয়ং অভিব্যক্তিস্বরূপ তাহারই বা অভিব্যক্তি কল্পনার প্রয়োজন কি? সুতরাং উভয় মতেই এই অনুযোগের তুল্যতানিবন্ধন আরম্ভবাদীদিগের উৎপত্তিবিষয়ে যেরূপ সিদ্ধান্ত পরিণামবাদীদিগের অভিব্যক্তি বিষয়েও সেইরূপ সিদ্ধান্ত ॥ ১২৩॥

প্রকৃতিকার্য্য মহদাদির পরস্পর সাধর্ম্য বলিতেছেন—সকারণত্ব বিনাশ পরিস্পন্দনরূপ ক্রিয়া পুরুষভেদে ভিন্নত্ব স্বকারণে আশ্রিতত্ব ও স্বকারণে লয় এই

यदि पञ्चविंशतितत्त्वं, किं ज्ञानसुखादीनां सामान्यकर्म्मणामभाव एव । तथा च दृष्टपरित्याग इत्यत आह—

**आञ्जस्यादभेदतो वा गुणसामान्यादेस्तत्सिद्धिः प्रधानव्यपदेशाद्वा ॥ १२५ ॥**

आञ्जस्यात् स्वरूपतः चतुर्विंशतितत्त्वात् अभेदतस्तल्लक्षणयोगात् गुणसामान्यादीनाम् । तत्सिद्धिः तेषु एवान्तर्भावात्सिद्धिः । वाशब्दः पक्षान्तरं सूचयति । 'प्रधानव्यपदेशाद्वा' गुणादीनां पारम्पर्य्येण प्रधानकार्य्यत्वेन कार्य्यकारणयोरभेदात् प्रधानव्यपदेशादेव गुणादिसिद्धिः । न तु अभावात् अननुकीर्त्तनम् ॥ १२५ ॥

---

मिति फलितम् । अत्र च हेतुमदनित्यमित्यनन्तरं "अव्यापीत्य"धिको भाष्यसम्मतः पाठः, कारिकायान्तु साश्रयत्वादिकमपि साधर्म्म्यमुक्तम् यथा—

"हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् ।
सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्त"मिति ॥

तथाचैतत्सूत्रोपात्तमन्यतमं तेषामप्युपलक्षकमिति मन्तव्यम् ॥ १२४ ॥

सूत्रान्तरमवतारयितुं पृच्छति—यदीत्यादिना । आञ्जस्यादित्यस्यार्थमाह—स्वरूपत इति । धर्म्मधर्म्मिणोरभेदेन गुणादेश्चतुर्व्विंशतितत्त्वाव्यतिरिक्तत्वादित्यर्थः । कस्मादभेदत इत्याकाङ्क्षायां पूरयति—चतुर्व्विंशतितत्त्वादिति । आदिपदग्राह्याणामपि बहूनां सत्त्वाद्गुणसामान्यादेरिति पदं बहुवचनान्ततया व्याचष्टे—गुणसामान्यादीनामिति । तेषु चतुर्व्विंशतितत्त्वेषु,

---

সকল কার্য্যমাত্রেরই সমান ধর্ম্ম, অর্থাৎ সমস্ত কার্য্যেই এই সমস্ত ধর্ম্ম বিদ্যমান আছে ॥ ১২৪ ॥

সাংখ্যমতে যদি পঞ্চবিংশতিমাত্রই তত্ত্ব হয়, তবে তাহাদের মতে কি জ্ঞান-সুখাদিরূপ গুণের সামান্যের ( জাতির ) এবং কর্ম্মের অভাবই সিদ্ধান্তিত ? কিন্তু তাহা হইলে প্রত্যক্ষসিদ্ধ পদার্থের অপলাপরূপ দোষ হয়, এই আশঙ্কায় বলিতেছেন—ধর্ম্ম ও ধর্ম্মীর অভেদনিবন্ধন গুণসামান্যাদি চতুর্ব্বিংশতি তত্ত্বেরই স্বরূপ, অথবা চতুর্ব্বিংশতি তত্ত্বের লক্ষণাক্রান্ত বলিয়া চতুর্ব্বিংশতি তত্ত্বেরই

প্রকৃতিকার্য্যয়োঃ সাধর্ম্ম্যমাহ—

ত্রিগুণাচেতনত্বাদি দ্বয়োঃ॥ ১২৬ ॥

ত্রিগুণমচেতনম্। আদিশব্দাৎ পরার্থত্বম্। দ্বয়োরিতি কার্য্যকারণয়োঃ॥ ১২৬ ॥

প্রকৃতিভাগস্য ত্রিগুণস্যান্যোঽন্যবৈধর্ম্ম্যমাহ—

প্রীত্যপ্রীতিবিষাদাদ্যৈর্গুণানামন্যোঽন্যং বৈধর্ম্ম্যম্ ॥১২৭

প্রীতিঃ সুখম্। আদিশব্দাৎ লঘু প্রকাশকং সত্ত্বম্। অপ্রীতিঃ

সিদ্ধিঃ গুণসামান্যাদীনামিত্যর্থঃ। প্রধানব্যপদেশাদ্বেতি পক্ষান্তরে তৎসিদ্ধিরিতি তস্য বিবরণং গুণাদিসিদ্ধিরিতি উপসংহরতি—নত্বিত্যাদিনা॥ ১২৫ ॥

সূত্রান্তরমবতারয়িতুমাহ—প্রকৃতীত্যাদি। দ্বন্দ্বোত্তরশ্রূয়মাণপ্রত্যয়স্যৈব প্রত্যেকাভিসম্বন্ধনিয়মাৎ সূত্রীয়ত্বপ্রত্যয়ান্তপ্রকৃতৌ দ্বন্দ্বসমাসং সূচয়িতুং বিভজ্য দর্শয়তি—ত্রিগুণমচেতনমিতি। তথাচ ত্রিগুণত্বং অচেতনত্বং পরার্থত্বঞ্চ কার্য্যকারণয়োঃ সাধর্ম্ম্যমিতি সূত্রার্থঃ॥ ১২৬ ॥

সূত্রান্তরমবতারয়তি—প্রকৃতীত্যাদিনা। ত্রিগুণস্য—সত্ত্বরজস্তমোরূপদ্রব্যত্রয়স্য। আদিশব্দাদিতি, আদিশব্দসমানার্থকাদ্যশব্দাদিত্যর্থঃ, "দ্বন্দ্বাৎ পরঃ শ্রূয়মাণঃ শব্দঃ প্রত্যেকমভিসম্বধ্যতে" ইতি ন্যায়াদাদ্যশব্দস্য প্রীত্যাদিপ্রত্যেকাভিসম্বন্ধমভিসন্ধায় বারত্রয়মাদিশব্দস্যার্থং দর্শিতমিতি মন্তব্যম্। লঘু—লাঘবান্বিতং, প্রকাশকং—বিষয়াদ্ভাসকং প্রীত্যাদীনাং যথাসংখ্যমভিপ্রেত্য ধর্ম্মি নির্দিশতি—সত্ত্বমেবেত্যর্থঃ, তথাচ সুখস্বরূপত্বলঘুত্বপ্রকাশকত্বানি

অন্তর্ভূত। সুতরাং সাংখ্যমতেও গুণাদির সিদ্ধি আছে। অথবা গুণসামান্যাদি ও পরম্পরা প্রধানেরই কার্য্য, অথচ সাংখ্যমতে কার্য্য ও কারণ অভিন্ন, সুতরাং প্রধান-ব্যপদেশেই গুণাদির সিদ্ধি আছে। অতএব অভাবনিবন্ধন যে গুণাদির কীর্ত্তন করেন নাই, তাহা নহে॥ ১২৫ ॥

প্রকৃতি ও কার্য্যের সাধর্ম্ম্য বলিতেছেন, ত্রিগুণত্ব, অচেতনত্ব ও পরার্থত্ব এই তিনটি প্রকৃতি ও তৎকার্য্যের সমান ধর্ম্ম॥ ১২৬ ॥

সত্ত্ব, রজঃ ও তমোরূপ যে প্রকৃতির তিনটি ভাগ, তাহাদের পরস্পর বিরুদ্ধধর্ম্ম বলিতেছেন, কেবল সত্ত্বগুণই সুখস্বরূপ, লঘু ও প্রকাশক, সুতরাং সুখস্বরূপত্ব, লঘুত্ব ও প্রকাশকত্ব এই তিনটি রজঃ ও তমোগুণের বিরুদ্ধ ধর্ম্ম।

दुःखम् । आदिशब्दात् उपष्टम्भकं चलं रजः । विषादः मोहः । आदिशब्दात् गुरु वरणकं तमः ॥ १२७ ॥

तेषां वैधर्म्यकथनावसरे साधर्म्यमाह—

**लघ्वादिधर्मैरन्योऽन्यं साधर्म्यं वैधर्म्यं गुणानाम् ॥ १२८**

लघुचलगुरुत्वैः । अनेन वैधर्म्यमुक्तम् । आदिशब्दात् साधर्म्यं सूचितं, तच्च पुरुषार्थत्वं अन्योऽन्याभिभवजननमिथुनवृत्तित्वम् ॥ १२८

---

रजस्तमसो वैधर्म्याणीति फलितम् । उपष्टम्भकं—परेषां प्रवर्त्तकं, चलं—स्वयं क्रियाशीलं, रजः—रज एव, दुःखस्वरूपत्वोपष्टम्भकत्वचलत्वानि सत्त्वतमसोर्वैधर्म्याणीति फलितम् । गरु—गुरुत्वान्वितं, वरणकं—आवरकं तमः—तम एव, तथाच पूर्ववदत्रापि मोहस्वरूपत्व-गुरुत्वावरकत्वानि सत्त्वरजसोर्वैधर्म्याणीति स्थितम् ॥ १२७ ॥

सूत्रान्तरमवतारयितुमाह—तेषामिति, सत्त्वरजस्तमसामित्यर्थः । लघ्वादीत्यस्य भावप्रधान-निर्द्देशमभिप्रेत्य व्याचष्टे—लघुचलगुरुत्वैरिति । अनेन—लघुत्वादिधर्म्मोपन्यासेन । पूर्व्वसूत्रे चैव लघुत्वादिधर्म्मैर्व्वैधर्म्यस्योक्ततया इह पुनर्व्वैधर्म्यकथनं सम्पातायातमेव, भाष्यकारस्याप्यत्रैव सम्मतिरित्यनुसन्धेयम् । ननु सूत्रे साधर्म्यमुक्तं, किन्तु तत्प्रतिपादको धर्म्मः कथं नाभिहित इत्याकाङ्क्षायामाह—आदिशब्दादिति । साधर्म्यसम्पादकमादिशब्दप्रतिपाद्यं दर्शयति—तच्चेत्यादिना । वृत्तिः क्रिया, सा च प्रत्येकमभिसम्बध्यते, तथाच अन्योऽन्याभिभववृत्तित्वं अन्योऽन्यजननवृत्तित्वं, अन्योऽन्यमिथुनवृत्तित्वं पुरुषार्थत्वञ्च गुणानां साधर्म्यमिति फलितम् । अन्योऽन्याभिभववृत्तित्वादिकमग्रे व्यक्तीभविष्यति । अन्योऽन्यमिथुनवृत्तित्वे आगमोऽप्यस्ति यथा—

"अन्योऽन्यमिथुनाः सर्व्वे सर्व्वे सर्व्वत्र गामिनः ।
रजसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः ॥
तमसश्चापि मिथुने ते सत्त्वरजसी उभे ।
उभयोः सत्त्वरजसोर्मिथुनं तम उच्यते ॥

কেবল রজোগুণই দুঃখস্বরূপ, পরের প্রবর্ত্তক ও চঞ্চল, সুতরাং দুঃখস্বরূপত্ব, প্রবর্ত্তকত্ব ও চঞ্চলত্ব এই তিনটি সত্ত্ব ও তমোগুণের বিরুদ্ধ ধর্ম্ম। কেবল তমোগুণই মোহস্বরূপ, গুরুত্বযুক্ত ও আবরক, সুতরাং মোহস্বরূপত্ব, গুরুত্ব ও আবরকত্ব এই তিনটি সত্ত্ব ও রজোগুণের বিরুদ্ধ ধর্ম্ম ॥ ১২৭ ॥

গুণত্রয়ের বৈধর্ম্ম্যকথনাবসরে সাধর্ম্ম্যও বলিতেছেন, লঘুত্ব, চলত্ব ও গুরুত্ব

हेतुमदित्यादिना महदादीनां कार्य्यत्वमुक्तम्। तत्र प्रमाणमाह—

उभयान्यत्वात् कार्य्यत्वं महदादेर्घटादिवत् ॥ १२९

प्रकृतिपुरुषयोर्नित्ययोरन्यत्वात्। शेषं व्यक्तम् ॥ १२९ ॥

हेत्वन्तरमाह—

परिमाणात् ॥ १३० ॥

परिमितत्वात् ॥ १३० ॥

अपरां युक्तिमाह—

समन्वयात् ॥ १३१ ॥

प्रधानेन सह सम्यगन्वयात् प्रधानगुणानां सर्वपदार्थेषु दर्श-नात् ॥ १३१ ॥

---

गेषामादिः संप्रयोगो वियोगो वोपलभ्यत" इति ॥ १२८ ॥

महदादीनां कार्य्यत्वे प्रमाणप्रदर्शकं सूत्रमवतारयति—हेतुमदित्यादिना। उभयान्य-त्वादिति पदं व्याचष्टे—प्रकृतीत्यादिना। तथाच नित्यत्वेन महदादेः कार्य्यत्वमनुमेयमिति भावः ॥ १२९ ॥

हेत्वन्तरमिति, महदादेः कार्य्यत्वे साधकान्तरमित्यर्थः। परिमितत्वात्—अपकृष्टपरि-माणवत्त्वात्, महदादेः कार्य्यत्वमिति पूर्व्वेण सम्बन्धः ॥ १३० ॥

अपरां युक्तिमिति, महदादेः कार्य्यत्व इत्यादिः। समन्वयादित्यस्यार्थमाह—प्रधानेनेत्या-

---

পরস্পরের বিরুদ্ধ ধর্ম্ম। পরার্থত্ব, অন্যোন্যাভিভববৃত্তিত্ব ও অন্যোন্যজননবৃত্তিত্ব এই তিনটি পরস্পরের সমান ধর্ম্ম ॥ ১২৮ ॥

হেতুমদিত্যাদি দ্বারা মহদাদির কার্য্যত্ব বলা হইয়াছে, সেই কার্য্যত্ব বিষয়ে প্রমাণ বলিতেছেন—নিত্য প্রকৃতি ও পুরুষ হইতে ভিন্নত্ব (অর্থাৎ অনিত্যত্ব) নিবন্ধন ঘটাদির ন্যায় মহদাদিও কার্য্য ॥ ১২৯ ॥

মহদাদির কার্য্যত্বসাধক হেত্বন্তর বলিতেছেন—পরিমিতত্ব (অর্থাৎ অপকৃষ্ট পরিমাণবত্ত্ব) হেতু দ্বারাও মহদাদির কার্য্যত্ব সিদ্ধ হইবে, কারণ যাহাতে অপকৃষ্ট পরিমাণ আছে, সেই কার্য্য, যেমন ঘটাদি ॥ ১৩০ ॥

মহদাদির কার্য্যত্বে আরও যুক্তি বলিতেছেন—মহদাদি সমস্ত পদার্থে

एतदेवाह—

**शक्तितश्चेति ॥ १३२ ॥**

कारणशक्त्या कार्य्यं प्रवर्त्तते इति महदादयः क्षीणाः सन्तः प्रकृत्यनुपूरणेन कार्य्यं जनयन्ति। अन्यथा प्रवृत्तिशीलत्वात् सर्वदा कार्य्यं जनयेयुः ॥ १३२ ॥

व्यतिरेकमाह—

**तद्धाने प्रकृतिः पुरुषो वा ॥ १३२ ॥**

कार्य्यम् अकार्य्यञ्च कोटिद्वयम्। कार्य्यताहाने प्रकृतौ पुरुषे वा महदादीनां प्रवेश इति ॥ १३२ ॥

दिना। तथाच यद्यद्गुणान्वितं तत्तत्कार्य्यमिति व्याप्त्या महदादेः प्रधानगुणान्वितत्वेन प्रधान-कार्य्यत्वे सिद्धे सुतरां कार्य्यत्वसिद्धिरिति भावः ॥ १३१ ॥

सूत्रान्तरमवतारयितुमाह—एतदेवेति। समन्वयत्वमेवेत्यर्थः। सूत्रस्य भावं वर्णयति—कारणशक्तेत्यादिना। अन्यथा—"प्रकृत्यनुपूरणेन महदादयः कार्य्यं जनयन्ती" त्यस्यास्वीकारे। जनयेयुरिति, किन्तु महदादयः सर्व्वदा कार्य्यं न जनयन्तीति सिद्धान्तः। तथाच ये यदनु-पूरणेन कार्य्यं जनयन्ति, तत्र तद्गुणवत्त्वं निर्व्विवादमेवेति सिद्धं समन्वयवत्त्वमिति भावः ॥१३२॥

सूत्रान्तरावतरणिकामाह—व्यतिरेकमिति, कार्य्यताया अभावे पृथक्तया महदादीना-

প্রধানের গুণ দেখা যায় বলিয়াও মহদাদির কার্য্যত্ব সিদ্ধ হয়, কারণ যে যাহার গুণে অন্বিত হয়, সে তাহার কার্য্য হয়, যেমন মৃত্তিকাগুণান্বিত ঘট মৃত্তিকার কার্য্য ॥ ১৩১ ॥

এই সমন্বয়বত্বই বলিতেছেন—কারণের শক্তিদ্বারাই কার্য্যের প্রবৃত্তি হয়, সুতরাং মহদাদি ক্ষীণ হইয়াও প্রকৃতির অনুপূরণদ্বারা (অর্থাৎ প্রকৃতির শক্তিতে শক্তিমৎ হইয়া) কার্য্য জন্মাইয়া থাকে। তাহা না হইলে প্রবৃত্তিশীল মহদাদি সর্ব্বদাই কার্য্য জন্মাইতে পারে (কিন্তু তাহা ত জন্মায় না) যে যদনুপূরণে কার্য্য জন্মায়, তাহাতে তাহার (পূরকের) গুণ থাকা স্বাভাবিক, সুতরাং মহদাদিতে প্রকৃতির গুণানুপ্রবেশরূপ সমন্বয়বত্ত্ব নির্ব্বিবাদেই সিদ্ধ হইল ॥ ১৩২ ॥

उभयकोटिविनिर्मुक्ता एव महदादयो भविष्यन्ति इत्यत आह—

**तयोरन्यत्वे तुच्छत्वम् ॥ १३४ ॥**

तयोः—कार्य्याकार्य्ययोः, अन्यत्वे महदादीनां तुच्छरूपत्वं—अभावरूपत्वम् ॥ १३४ ॥

किमर्थं महदादयः कार्य्यत्वेन प्रकृतेः लिङ्गम्। अविनाभावादेव लिङ्गं भविष्यन्ति इत्यत आह—

**कार्य्यात् कारणानुमानं तत्साहित्यात् ॥ १३५ ॥**

भवति एव, यत्र कारणरूपं कार्य्यं न दृश्यते, यथा चन्द्रोदयादविनाभूतया समुद्रवृद्ध्याऽनुमानम्। अत्र तु प्रधानरूपस्य महदादौ

---

मसत्स्वरूपं व्यतिरेकमित्यर्थः। सूत्रतात्पर्य्यं विवृणोति—कार्य्यमित्यादिना। कोटिद्वयं—प्रकारद्वयम्। प्रकृताविति, परिणामित्व इत्यादिः। पुरुष इति, अपरिणामित्व इत्यादिः ॥ १३३ ॥

सूत्रान्तरमवतारयति—उभयेत्यादिना। उभयकोटिविनिर्म्मुक्ताः—कार्य्याकार्य्यरूपप्रकारद्वयव्यतिरिक्ताः। सूत्रं व्याचष्टे—तयोरित्यादिना। अभावरूपत्वमिति, आपद्येत इति शेषः, कार्य्याकार्य्यव्यतिरि भावपदार्थस्यादृष्टचरत्वादिति भावः ॥ १३४ ॥

सूत्रान्तरमवतारयितुं शङ्कते—किमर्थमित्यादिना। अविनाभावात्—प्रकृतेर्व्विना अभावात्, एवं—अविनाभावादेव लिङ्गं। अनुमानम्—चन्द्रोदयानुमानम्। क्वचित् पुस्तके "चन्द्रोदयात

---

মহদাদি যদি কার্য্য না হয়, তবে তাহাদের পৃথগ্ রূপে অসত্ত্ব প্রসক্তিরূপ ব্যতিরেক বলিতেছেন—জগতে কার্য্য বা অকার্য্য এই দ্বিকোটিক বস্তুই বর্ত্তমান আছে, মহদাদি যদি কার্য্য না হয়, তবে পরিণামী হইলে প্রকৃতি ও অপরিণামী হইলে পুরুষ ( কারণ প্রকৃতি ও পুরুষ ভিন্ন আর কোন বস্তুই অকার্য্য নহে ) ॥ ১৩৩ ॥

কার্য্যাকার্য্যরূপ কোটিদ্বয় হইতে ভিন্নই মহদাদি স্বীকার করিব, এই আশঙ্কায় বলিতেছেন—মহদাদি যদি কার্য্য বা অকার্য্য না হয়, তবে তাহাদের তুচ্ছত্ব অর্থাৎ আকাশকুসুমাদির ন্যায় অসত্ত্ব প্রসক্তি হয় ॥ ১৩৪ ॥

মহদাদিকে কার্য্যস্বরূপে প্রকৃতির অনুমাপক স্বীকার করি কেন ? অবিনাভাবনিবন্ধন ( অর্থাৎ প্রকৃতি ভিন্ন হয় না বলিয়াই ) অনুমাপক হইবে,

दर्शनात् कार्य्यात् कारणानुमानमेव। तत्साहित्यात् प्रकृतिरूपस्य महदादौ दर्शनात्॥ १३५॥

एवञ्च महत्तत्वमेव जगत्कारणमस्तु, किं प्रधानेन? इत्यत आह—

अव्यक्तं त्रिगुणाल्लिङ्गात्॥ १३६॥

त्रिगुणात् लिङ्गात्, लयं गच्छति इति, महत्तत्वात् प्रधानमनुमातव्यम्। महत्तत्वं च अध्यवसायरूपं व्यक्तं विनाशि प्रत्यक्षसिद्धम्। तेन लिङ्गानुमानम्॥ १३६॥

क्वचित् पुस्तके "समुद्रवद्यनुमान"मेतावन्मात्रं पाठः, तस्य समूलत्वे एवमेवाध्याहारादिना प्रकृतोपयोगित्वं कथञ्चित् समर्थनीयम्। सूत्रार्थं विवृणोति—अत्रेत्यादिना। कार्य्यात्—कार्य्यत्वात्। तथाचायमत्राभिप्रायः—अविनाभूतत्वं नाम निमित्तनैमित्तिकसाधारणं, किन्तु नैमित्तिकेषु कार्य्येषु निमित्तस्य गुणा न दृश्यन्ते, उपादेये च कार्य्ये उपादानकारणस्य गुणा यावत् सत्त्वमुपलभ्यन्त इति निमित्तनैमित्तिकभावविलक्षणः कश्चन कार्य्यकारणभावस्तत्रावश्यमङ्गीकार्य्य इति तत्सिद्धं कार्य्यत्वमेवोपादानकारणीभूतप्रधानसाधने समुपयुक्तमिति॥ १३५॥

सूत्रान्तरमवतारयितुं शङ्कते—एवञ्चेत्यादिना। लिङ्गशब्दस्य व्युत्पत्तिं दर्शयति—लयं गच्छतीति, विशेष्यपदं दर्शयति—महत्तत्वादिति। प्रधानमिति अव्यक्तमित्यस्य विवरणम्, शेषं पूरयति—अनुमातव्यमिति। एतदेव विशदयति—महत्तत्वमित्यादिना, तेन—विनाशिना महत्तत्वेन लिङ्गेन, लिङ्गि—(लिङ्गं—विनाशिकार्य्यरूपमनुमापकं अस्यास्तीति व्युत्पत्त्या)

এই আশঙ্কায় বলিতেছেন—অবিনাভাবনিবন্ধনও অনুমাপক হইয়া থাকে, যে স্থলে কারণের রূপ কার্য্যে পরিদৃষ্ট না হয়, যেমন চন্দ্রোদয়ের অবিনাভূত (অর্থাৎ চন্দ্রোদয় ব্যতিরেকে যাহা হয় না এইরূপ) সমুদ্র বৃদ্ধিদ্বারা চন্দ্রোদয়ের অনুমান। কিন্তু মহদাদিতে প্রধানের স্বরূপ পরিদৃষ্ট হয় বিধায় এস্থলে কার্য্যত্ব-নিবন্ধন কারণের অনুমানই হইবে॥ ১৩৫॥

কার্য্যত্ব হেতুদ্বারা জগতের সকারণত্ব সিদ্ধ হইলেও মহত্তত্ত্বই জগতের কারণ হউক, প্রধান স্বীকারের প্রয়োজন কি? এই আশঙ্কায় বলিতেছেন—যাহার লয় হয়, তাহার নাম লিঙ্গ, ত্রিগুণ অথচ লিঙ্গ মহত্তত্ত্ব হইতেই প্রধানের

तथापि अन्यदेव कारणं भविष्यति, किं प्रकृत्या ? इत्यत्राह—

**तत्कार्य्यतस्तत्सिद्धेर्नापलापः ॥ १३७ ॥**

तत्कारणं कार्य्यम् अकार्य्यं वा। कार्य्यत्वे तत्कारणस्यापि तथात्वे सति अनवस्था। मूलकार्य्यत्वे तदेव सा इति। 'तत्कार्य्यत' इति प्रकृतिकार्य्यतः प्रकृतिसिद्धेः न अपलापः ॥ १३७ ॥

प्रधानं तस्यानुमानम्। तथाचायमाशयः—महत्तत्त्वस्य कार्य्यत्वस्यापि केनचिन्मूलकारणेनावश्यं भवितव्यं, यस्य च विनाशिनस्तस्य लयोऽपि भवेत्, यदेव च तन्मूलकारणं तदेवास्माकं प्रधानमिति ॥ १३६ ॥

प्रधानसिद्धौ युक्त्यन्तरप्रदर्शकं सूत्रमवतारयितुं शङ्कते—तथापीत्यादिना। सूत्रतात्पर्य्यमभिधातुं विकल्पयति—तदित्यादिना। तत्कारणस्यापि—तस्य कारणस्य कारणस्यापि, तथात्वे—कार्य्यत्वे, अनवस्थेति, तस्य तस्यापि कारणस्य कल्पनीयत्वादिति भावः। द्वितीयपक्षे दोषं दर्शयितुमाह—मूलकार्य्यत्व इति, कार्य्यत्वाभाववत्त्वे सति कारणत्वे इतिं तदर्थः, तदेव—तत्कारणमेव, सा—प्रकृतिः। सूत्रघटकपदार्थाभिधानाय प्रथमपदमुत्थापयति—तत्कार्य्यत इति ॥ १३७ ॥

অনুমান হইবে। ইহার তাৎপর্য্য এই যে, অধ্যবসায়রূপ মহত্তত্ত্ব যে ব্যক্ত ও বিনাশি ইহা প্রত্যক্ষসিদ্ধ, অথচ যে বিনাশি, অবশ্যই তাহার বিনাশের আশ্রয়রূপ কারণ স্বীকার করিতে হইবে, সেই কারণই প্রধান, সুতরাং মহত্তত্ত্বদ্বারাই লিঙ্গপ্রধানের অনুমান হইল ॥ ১৩৬ ॥

মহত্তত্ত্বের বিনাশিত্বনিবন্ধন তাহার কারণের সিদ্ধি হইলেও অন্যই সেই কারণ হইবে, প্রকৃতি স্বীকারের প্রয়োজন কি ? এই আশঙ্কায় বলিতেছেন— মহত্তত্ত্বের কারণরূপে যাহা স্বীকার করিবা, সেই কারণ জন্য কি নিত্য ? যদি জন্য হয়, তবে সেই কারণেরও কারণ স্বীকার করিতে হইবে, আবার সেই কারণেরও কারণ স্বীকার করিতে হইবে, এরূপ ভাবে অনবস্থা হইবে। আর যদি সেই কারণ নিত্য হয়, তবে সেই প্রকৃতি। অতএব প্রকৃতির কার্য্য হইতেই প্রকৃতিসিদ্ধির অপলাপ হইবে না ॥ ১৩৭ ॥

ভবতু প্রকৃতিসিদ্ধিঃ, পুরুষসিদ্ধির্ন স্যাদেব, ন হি তস্য কার্য্যমস্তি ইত্যত আহ—

**সামান্যেন বিবাদাভাবাদ্ধর্ম্মবন্ন তৎসাধনম্ ॥ ১২৮ ॥**

সামান্যেন তাবৎ আত্মনি বিবাদো নাস্তি, বিশেষে হি বিবাদঃ, 'অনেকঃ একঃ ব্যাপকঃ অব্যাপকঃ' ইত্যাদিঃ। যথা সর্ব্বস্মিন্ দর্শনে ধর্ম্মঃ ইতি অবিবাদঃ, ধর্ম্মবিশেষে হি বিপ্রতিপত্তিঃ। 'ন তৎসাধনং' ন তত্র কার্য্যকারণভাবঃ সাধনম্। অন্যৎ সাধনং বক্ষ্যামি ইতি অভিসন্ধিঃ ॥ ১২৮ ॥

দেহেন্দ্রিয়াদয় এব আত্মানঃ, কিমন্যকল্পনয়া ইত্যত আহ—

**শরীরাদিব্যতিরিক্তঃ পুমান্ ॥ ১২৯ ॥**

ব্যক্তম্ ॥ ১২৯ ॥

এবং প্রধানং প্রসাধ্য পুরুষসাধকসূত্রমবতারয়তি—ভবত্বিত্যাদিনা। "ন হি তস্য কার্য্যমস্তী"ত্যভিধানং কার্য্যলিঙ্গকানুমানস্য পুরুষসাধকত্বং নাস্তীতি প্রতিপাদনার্থং। সামান্যেন—আত্মত্বাদিরূপসাধারণধর্ম্মেণ ধর্ম্মবদিতি দৃষ্টান্তং বিশদয়তি—যথেত্যাদিনা। ষষ্ঠীতৎপুরুষসমাসং মনসিকৃত্য তৎসাধনপদং ব্যাচষ্টে—তত্র কার্য্যকারণভাবঃ সাধনমিতি। অপেক্ষ্যত ইতি শেষঃ। ননু বিশেষেঽপি কিং সাধনং ভবিষ্যতীত্যতঃ অভিসন্ধিং পূরয়তি—অন্যদিতি ॥ ১২৮ ॥

শরীরাদেরেবাত্মত্বমঙ্গীকুর্ব্বতাং চার্ব্বাকাণাং মতস্য নিরাসকং প্রতিজ্ঞাসূত্রমবতারয়তি—দেহেত্যাদিনা ॥ ১২৯ ॥

প্রকৃতির সিদ্ধি হউক, পুরুষের সিদ্ধিত হইতেই না, যে হেতু পুরুষের কোনও কার্য্য নাই, এই আশঙ্কায় বলিতেছেন—সামান্যতঃ আত্মার অস্তিত্বে কোনও বিবাদ নাই, (অর্থাৎ আত্মা সকলেই স্বীকার করিয়া থাকে) আত্মার বিশেষত্বে অর্থাৎ আত্মা এক কি অনেক, ব্যাপক কি অব্যাপক ইত্যাদি বিষয়েই বিবাদ আছে। যেমন সমস্ত দর্শনেই "ধর্ম্ম আছে" এ বিষয়ে কোনও বিবাদ নাই, ধর্ম্মের বিশেষত্বেই বিবাদ। অতএব সামান্যতঃ আত্মসাধনে কার্য্য-কারণভাবরূপ সাধনার অপেক্ষা নাই। আত্মার বিশেষত্বসাধনে অন্য হেতু বলা হইবে ॥ ১২৮ ॥

अत्र न्यायमाह—

**संहतपरार्थत्वात् ॥ १४० ॥**

यत् संहतं तत् असंहतपरार्थम्। संहतपरार्थत्वे अनवस्था स्यात्। संहतत्वञ्च गुणानाम् अन्योऽन्यमिथुनभावेन कार्य्यकरणम्। अथवा द्रवकठिनता संहतत्वं, तच्च प्रकृत्यादौ तिरोभूतमस्ति अन्यथा तत्कार्य्येषु संहततादर्शनप्रसङ्गात्॥ १४० ॥

---

प्रतिज्ञामात्रेण नात्मनः शरीरादिव्यतिरिक्तत्वं सिध्यतीति तत्र हेतुप्रदर्शकं सूत्रमवतारयति—अत्रेत्यादिना। "संहतस्य—गुणानां परस्परमिथुनभावेन कार्य्यं कुर्व्वतः प्रकृतिमहदादेः परार्थत्वात्—परस्य—स्वेतरस्य कस्यचिदसंहतस्येति यावत्, भोगापवर्गादिरूपप्रयोजनसाधकत्वात् देहादिव्यतिरिक्तः पुमान् इति सूत्रार्थः। अनन्तरोच्यमानामनवस्थां निरसितुं असंहतेति परस्य विशेषणं पूरयित्वा संहतस्यासंहतपरार्थत्वफलिका व्याप्तिं दर्शयति—यदित्यादिना। तथाचायं प्रयोगः—

प्रकृतिमहदादिकं असंहतपरार्थं संहतत्वात् शय्यासनादिवत्। योऽसौ असंहतः परः स एव पुरुष इति भावः। अनवस्था स्यादिति, तत्परस्यापि संहतत्वे तस्यापि परार्थत्वापत्त्या उत्तरोत्तरस्यापि परस्य संहतत्वेन परार्थत्वापत्तेरिति आशयः। लाघवात् प्रकारान्तरेण संहतत्वं निर्व्वक्तुमाह—अथवेति। द्रवकठिनतेति द्वन्द्वोत्तरप्रत्ययात् द्रवत्वं कठिनत्वञ्चेत्यर्थः। प्रकृत्यादौ

দেহ বা ইন্দ্রিয়াদিই আত্মা হইবে, অন্য কল্পনায় প্রয়োজন কি? এই আশঙ্কায় বলিতেছেন,—"পুরুষ শরীরাদি হইতে ভিন্ন" ॥ ১৩৯ ॥

পুরুষ যে শরীরাদি হইতে ভিন্ন সে বিষয়ে যুক্তি বলিতেছেন—যে সংহত, সেই অসংহত, কোনও পরের ভোগও অপবর্গের সাধক (যেমন শয্যাসনাদি) সুতরাং সেই অসংহত পরই পুরুষ। সেই পরও যদি সংহত হয়, তবে তাহারও পরার্থত্ব স্বীকার করিতে হয়, আবার সেই পরেরও পরার্থত্ব স্বীকার করিতে হয়, এরূপ ভাবে অনবস্থা হইয়া পরে। সত্ত্ব, রজ ও তমঃ এই ত্রিগুণত্ব। অথবা দ্রবত্ব বা কঠিনত্বের নাম সংহতত্ব। সেই সংহতত্ব প্রকৃত্যাদিতে তিরোহিত অবস্থায় আছে, তাহা না হইলে প্রকৃতির

एतदेव स्पष्टयति—

**त्रिगुणादिविपर्य्ययात् ॥ १४१ ॥**

पुरुषे त्रिगुणादिविपर्य्ययात् तददर्शनात्। आदिशब्दात् अन्येषां प्रकृतिधर्माणामपि अदर्शनात् इति ॥ १४१ ॥

न्यायान्तरमाह—

**अधिष्ठानाच्चेति ॥ १४२ ॥**

चेतनो हि अधिष्ठाता भवति प्रकृतिश्च जड़ा इत्यर्थः ॥ १४२ ॥

द्रवत्वादेरप्रत्यक्षत्वादाह—तत्त्वेति। द्रवत्वादिरूपं संहतत्वमित्यर्थः। तिरोभूतस्य तस्य तदा-स्वीकारे दोषं दर्शयति—अन्यथेत्यादिना। अदर्शनप्रसङ्गादिति, कारणे गुणानामेव कार्य्यगुणारम्भकत्वादिति भावः ॥ १४० ॥

ननु पुरुषस्यापि संहतत्वमस्तु असंहतत्वे प्रमाणाभावादित्याशङ्कानिरासकतया परसूत्रमवतारयितुमाह—एतदेवेति। पुरुषस्यासंहतत्वमेवेत्यर्थः। त्रिगुणेति भावप्रधानो निर्द्देशः, तथाच त्रैगुण्यादिरूपप्रकृतिधर्म्माभावात् पुरुषे असंहतत्वमनुमेयमिति भावः ॥ १४१ ॥

न्यायान्तरमिति, पुरुषस्यासंहतत्वानुमितौ हेत्वन्तरमित्यर्थः। अधिष्ठातृत्वस्य अपरिणामित्वे सति सन्निधानेन परिणामहेतुत्वं। स्वरूपासिद्धिव्यभिचारशङ्कां निराकरोति—चेतन इत्यादिना ॥ १४२ ॥

---

कार्य्य महदादितেও সংহতত্বের উপলব্ধি হইতে পারে না। (কারণ যাহার কারণে যে গুণ থাকে না, সেই কার্য্যেও সেই গুণ পরিদৃষ্ট হয় না, অর্থাৎ কারণের গুণই কার্য্যের গুণ জন্মাইয়া থাকে ॥ ১৪০ ॥

পুরুষ যে অসংহত তাহাই স্পষ্ট করিতেছেন—ত্রৈগুণ্যাদিরূপ যে প্রকৃতির ধর্ম্ম, তাহার অভাবনিবন্ধন পুরুষে অসংহতত্বের অনুমান হইবে। আদি-শব্দানুসারে অন্য প্রকৃতি ধর্ম্মের অভাবও অনুমাপক ॥ ১৪১ ॥

পুরুষের অসংহতত্বানুমানে হেত্বন্তর বলিতেছেন—অধিষ্ঠাতৃত্বনিবন্ধনও পুরুষই অধিষ্ঠাতা, প্রকৃতি জড়, সুতরাং তাহাতে অধিষ্ঠাতৃত্ব নাই ॥ ১৪২ ॥

युक्तयन्तरमाह—

**भोक्तृभावात् ॥ १४३ ॥**

भोग्या प्रकृतिः, भोक्ता पुरुषः । यद्यपि कूटस्थत्वादात्मनो भोक्तृत्वं नास्ति, तथापि बुद्धिच्छायापत्त्या इति उक्तम् ॥ १४३ ॥

भोगार्थं प्रवृत्तिः, सा किमात्मनः प्रकृतेर्वा ? इत्यत आह—

**कैवल्यार्थं प्रवृत्तेः ॥ १४४ ॥**

त्रिगुणस्वभावत्वात् प्रकृतेः न स्वभावप्रच्यवः, अनित्यत्वप्रसङ्गाच्च । यस्य औपाधिका गुणाः तस्य कैवल्यं सम्भवति । स च आत्मा इति ॥ १४४ ॥

युक्तयन्तरमिति, पुरुषस्यासंहतत्वे हेत्वन्तरमित्यर्थः । भोक्तृभावात्—भोक्तृत्वात् । व्यभिचारस्वरूपासिद्धिशङ्कां निराकरोति—भोग्येत्यादिना । पुरुषस्य कूटस्थत्वेन भोग्यरूपेण परिणामलक्षणं भोक्तृत्वं पुरुषे नास्तीति दर्शयति- यद्यपीत्यादिना । पुरुषे वस्तुगत्या निरुक्तभोक्तृत्वाभावेऽपि प्रतिबिम्बरूपेणाभिमानिकभोक्तृत्वमस्तीति दर्शयति—तथापीत्यादिना । तथाचाभिमानिकभोक्तृत्वेनैवासंहतत्वमनुमेयमिति भावः ॥ १४३ ॥

सूत्रान्तरमवतारयति—मोक्षेत्यादिना । सा—प्रकृतेः प्रवृत्तिः, प्रकृतेर्व्वेति मोक्षायेति शेषः । "कैवल्यार्थं प्रवृत्तेश्च पुरुषोऽस्तीति" सूत्रार्थं प्रतिपादयति--त्रिगुणेत्यादिना । न स्वभावप्रच्यव इति, तथाच प्रकृतेर्मोक्षो न सम्भवतीति भावः । नन्वस्तु स्वभावस्यापि नाश इत्यत आह—अनित्यत्वप्रसङ्गाच्चेति । स्वभावस्य यावद्द्रव्यभावित्वेन स्वभावनाशे स्वभाविनोऽपि नाशावश्यम्भावादित्याशयः । नन्वेवं कस्य मोक्ष इत्याह—यस्येति । औपाधिकाः—बुद्धिच्छायापत्तिरूपोपाधिसाध्या गुणाः—

পুরুষের অসংহতত্বে হেত্বন্তর বলিতেছেন—প্রকৃতি ভোগ্য ও পুরুষ ভোক্তা, সুতরাং ভোক্তৃত্বনিবন্ধনও পুরুষ অসংহত, যদিও অপরিণামী পুরুষে প্রকৃত ভোক্তৃত্ব নাই, তথাপি বুদ্ধিপ্রতিবিম্ববশতঃ ভোক্তৃত্বের অভিমান আছে। সেই আভিমানিক ভোক্তৃত্বই পুরুষের অসংহতত্বের অনুমাপক ॥ ১৪৩ ॥

মোক্ষের জন্য প্রকৃতির প্রবৃত্তি হয়, সেই প্রবৃত্তি প্রকৃতির কি পুরুষের মুক্তির জন্য ? এই আশঙ্কায় বলিতেছেন—প্রকৃতি ত্রিগুণ স্বভাব, তাহার সেই ত্রিগুণরূপ স্বভাবের বিচ্যুতি হইতে পারে না, কারণ তাহা হইলে

स किंरूप ? इत्यत आह—

**जडप्रकाशायोगात् प्रकाशः ॥ १४५ ॥**

जडः न प्रकाशते इति सिद्धम्। यदि आत्मा अपि जडः स्यात्, तस्यापि अन्येन प्रकाशेन भवितव्यम्। लाघवाच्च आत्मा एव प्रकाश-रूपोऽस्तु। श्रुतिश्च 'येनेदं सर्वं विजानाति तं केन विजानीयात्, विज्ञातारमरे केन विजानीयात् इति' ॥ १४५ ॥

जडोऽपि आत्मा अस्तु चिद्धर्मा। तेन जगत् प्रकाशयति, न तु चिद्रूप इत्यत आह—

**निर्गुणत्वान्न चिद्धर्मा ॥ १४६ ॥**

यदि आत्मनो धर्मयोगः स्यात्, परिणामित्वं स्यात्, ततश्चानिर्मोक्ष इति ॥ १४६ ॥

---

भोगादयः। सम्भवतीति, औपाधिकगुणनाशेऽपि गुणानोऽविनाशसम्भवादिति भावः। नन्वेवं-भूतः क इत्याह—स चेति। तथाच यस्य विमोक्षार्थं प्रधानप्रवृत्तिः स एव पुरुष इति सिद्ध-मिति साधत्वं कैवल्यार्थं प्रवृत्तेः पुरुषोऽस्तीति ॥ १४४ ॥

एवं पुरुषं प्रसाध्य तस्य स्वरूपनिरूपकं सूत्रमवतारयति—स किंरूप इत्यादिना। "जडस्य प्रकाशायोगात् आत्मा प्रकाशस्वरूप" इति सूत्रार्थं सङ्गमयति—जड इत्यादिना। नन्वस्तु अन्य एव प्रकाश इत्यत आह—लाघवाच्चेति। अनन्तातिरिक्तप्रकाशतत्कारणध्वंसादिकल्पनामपेक्ष्य आत्मन एव प्रकाशस्वरूपत्वकल्पने लाघवादित्यर्थः। आत्मनः स्वतः प्रकाशत्वे बृहदारण्यक-द्वितीयाध्यायचतुर्थब्राह्मणचतुर्दशमन्त्रं प्रमाणयितुमाह—श्रुतिश्चेति ॥ १४५ ॥

---

প্রকৃতির আনন্ত্যের আপত্তি হয়। (অতএব প্রকৃতির মুক্তি অসম্ভব) যাহার গুণ ঔপাধিক, অর্থাৎ বুদ্ধি-প্রতিবিম্বরূপ উপাধিসাধ্য, তাহারই মুক্তি সম্ভবপর। আত্মাই ঔপাধিক্য গুণবিশিষ্ট ॥ ১৪৪ ॥

আত্মার স্বরূপ কি ? এই আকাঙ্ক্ষায় বলিতেছেন—যে জড়, সে প্রকাশিত হয় না, ইহা প্রসিদ্ধ, যদি আত্মাও জড় হয়, তবে তাহারও অন্য প্রকার স্বীকার করিতে হয়, সুতরাং লাঘবতঃ আত্মাই প্রকাশস্বরূপ। এ বিষয়ে শ্রুতিও আছে—"যদ্দ্বারা সমস্ত জানা যায়, কাহা দ্বারা তাহাকে জানা যাইবে ? যে বিজ্ঞাতা, তাহাকে কাহা দ্বারা জানা যাইবে ?" ॥ ১৪৫ ॥

অত্র শ্রুতিবিরোধমাহ—

**শ্রুত্যা সিদ্ধস্য নাপলাপস্তৎপ্রত্যক্ষবাধাৎ ॥ ১৪৭**

'অসঙ্গো হ্যয়ং পুরুষঃ' ইত্যাদি শ্রুতিঃ। গুণযোগে সা বাধিতা স্যাৎ ॥ ১৪৭ ॥

দূষণান্তরমাহ—

**সুষুপ্ত্যাদ্যসাক্ষিত্বম্ ॥ ১৪৮ ॥**

যদি আত্মা জড়ঃ স্যাৎ, সুষুপ্ত্যাদৌ অসাক্ষিত্বং অজ্ঞাতৃত্বং স্যাৎ।

আত্মনশ্চৈতন্যধর্ম্মকত্ববাদিনো মতস্য নিরাসকং সূত্রমবতারয়তি—জড় ইত্যাদিনা। আত্মনো ধর্ম্মবত্ত্বে নির্গুণত্বাদিকং নোপপদ্যত ইতি সূত্রতাৎপর্য্যম্। চিন্মাত্রত্বে তু "অকর্ত্তা চৈতন্যং সচ্চিদেকরসো হ্যয়মাত্মে"ত্যাঃ শ্রুতয়ঃ সন্তি। নন্বেবং সর্ব্বজ্ঞত্বাদি শ্রুতীনাং কা গতিরিতি চেন্ন তাসাং বাহ্যৌঃ গির ইতিবল্লৌকিকবিকল্পানুবাদমাত্রত্বাৎ বিধিনিষেধশ্রুতিসাধ্যনিষেধশ্রুতের্ব্বল-বত্ত্বেন নির্গুণত্বশ্রুতের্ব্বলবত্ত্বাচ্চ। বৃত্তিকারো দোষান্তরং পূরয়তি—যদীত্যাদিনা ॥ ১৪৬ ॥

আত্মনো গুণযোগে শ্রুতিবিরোধপ্রদর্শকং সূত্রমবতারয়িতুমাহ—অত্রেতি। আত্মনো গুণযোগ ইত্যর্থঃ। "সাক্ষী চেতা কেবলো নির্গুণশ্চ" ইত্যাদিশ্রুত্যা সিদ্ধস্য নির্গুণত্বাদের্নাপলাপঃ তৎপ্রত্যক্ষস্য শ্রুত্যৈব বাধাদিতি সূত্রার্থঃ."। বৃহদারণ্যকচতুর্থাধ্যায়তৃতীয়ব্রাহ্মণপঞ্চদশমন্ত্রাত্মিকাং শ্রুতি-মুত্থাপয়তি—অসঙ্গ ইতি ॥ ১৪৭ ॥

দূষণান্তরমিতি, আত্মনো জড়ত্বে দূষণান্তরমিত্যর্থঃ। সূত্রতাৎপর্য্যং বিবৃণোতি—যদি·

আত্মা জড় হইলেও চৈতন্য তাহার ধর্ম্ম স্বীকার করিব, সেই চৈতন্য দ্বারাই জগৎ প্রকাশ করিবে, কিন্তু আত্মা চিৎস্বরূপ নহে, এই আশঙ্কায় বলিতে-ছেন— আত্মা নিগুণ, সুতরাং চিৎ ( চৈতন্য ) তাহার ধর্ম্ম হইতে পারে না। আত্মায় যদি ধর্ম্মযোগ হয়, তবে পরিণামিত্ব হইতে পারে, এবং তাহা হইলে মুক্তি হইতে পারে না ॥ ১৪৬ ॥

আত্মার গুণযোগ স্বীকারে শ্রুতিবিরোধ বলিতেছেন—"শ্রুতিদ্বারাই গুণাদি প্রত্যক্ষের বাধবশতঃ শ্রুতিসিদ্ধ নিগুণত্বের অপলাপ হইতে পারে না। শ্রুতি আছে, পুরুষ অসঙ্গ" যদি পুরুষের গুণযোগ স্বীকার করা যায়, তবে সেই শ্রুতি বাধিত হয় ॥ ১৪৭ ॥

न च एवं, सुखमहमस्वाप्सम् इति प्रतिभासनात् । आदिशब्दात् स्वप्नग्रहणम् ॥ १४८ ॥

एक एव आत्मा इति वेदान्तिनः । तथा च—
नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः ।
एकः स भिद्यते भ्रान्त्या मायया न स्वभावतः ॥ तत्राह—

**जन्मादिव्यवस्थातः पुरुषबहुत्वम् ॥ १४९ ॥**

यदि एकः आत्मा, एकस्मिन् जायमाने सर्वे जायेरन् ॥ १४९ ॥

त्यादिना । अज्ञातत्वं स्यादिति, तन्मते चैतन्यस्य कादाचित्कत्वं न तदानीमनङ्गीकारादिति भावः । एवं—कदाचिदप्यात्मनोऽज्ञातत्वं । अत्र युक्तिं दर्शयति—सुखमहमित्यादिना ॥ १४८ ॥

आत्मैक्यवादिनो वेदान्तिनो मतस्य निरासकं सूत्रमवतारयितुं भूमिकामारचयति—एक एवेत्यादिना । अपूर्वदेहेन्द्रियादिसंयोगो जन्म, आदिशब्देन मरणादिपरिग्रहः । पुरुषबहुत्वानङ्गीकारे अव्यवस्थां दर्शयति—यदीत्यादिना ॥ १४९ ॥

পুরুষের জড়ত্ব স্বীকারে দোষান্তর দেখাইতেছেন—যদি আত্মা জড় হয়, তবে সুষুপ্তি প্রভৃতি অবস্থাতে আত্মার জ্ঞাতৃত্ব থাকিতে পারে না, অথচ সুষুপ্ত্যাদি অবস্থাতেও আত্মা অজ্ঞাতা নহেন, কারণ "আমি সুখে শয়ন করিয়াছিলাম" এইরূপ প্রতিভাত হয়। সূত্রের আদিশব্দ দ্বারা স্বপ্নাবস্থার পরিগ্রহ হইবে ॥ ১৪৮ ॥

বেদান্তিগণ বলেন, আত্মা এক, তাঁহাদের মতে উক্তও হইয়াছে—"আত্মা নিত্য সর্ব্বব্যাপক অপরিণামী ও দোষরহিত, তিনি এক হইয়াও মায়াশক্তিদ্বারা বিভিন্ন বলিয়া প্রতীয়মান হন, কিন্তু স্বভাবতঃ তিনি ভিন্ন নহেন।" এই আশঙ্কায় বলিতেছেন—"জন্মমরণাদি ব্যবস্থার অনুরোধে পুরুষের বহুত্ব স্বীকার করিতে হইবে" আত্মা যদি এক হয়, তবে একজন জন্মিলে সকলেই জন্মিতে পারে। ( এবং একজন মরিলে সমস্তই মরিতে পারে ) সুতরাং জন্মমরণাদি ব্যবস্থা হইতে পারে না ॥ ১৪৯ ॥

परमतमाशङ्कते—

**उपाधिभेदेऽप्येकस्य नानायोग आकाशस्येव घटादिभिः ॥ १५० ॥**

यथा एकम् आकाशं, घटाद्युपाधिभेदात् घटे नष्टे 'घटाकाशं नष्टम्' इति व्यपदिश्यते, तथा एकात्मपक्षेऽपि देहावच्छेदात् तन्नाशे 'आत्मा नष्ट' इति। व्यपदेशमात्रम् नानात्वपक्षेऽपि, अन्यथा आत्मनो नित्यत्वात् कथं जन्ममरणव्यवस्था इति ॥ १५० ॥

समाधानमाह—

**उपाधिर्भिद्यते, न तु तद्वान् ॥ १५१ ॥**

उपाधिर्भिद्यते। न च अन्यनाशात् अन्यत्र नाशव्यवहारः

---

पूर्व्वपक्षसूत्रमवतारयति—परमतमित्यादिना। आकाशस्येवेति दृष्टान्तं स्पष्टीकुर्व्वन् सूत्रतात्पर्य्यं विवृणोति—यथेत्यादिना, तन्नाशे—देहनाशे आत्मनि नष्ट इतीत्यस्य व्यपदिश्यत इति पूर्व्वेण सम्बन्धः। ननु एकात्मवादे व्यपदेशाङ्गीकर्त्तव्यः, नानात्मपक्षे व्यपदेशाङ्गीकरणं नास्तीत्येव विशेष इत्याशङ्कायामाह—व्यपदेशमात्रं नानात्मपक्षेऽपीति, विपक्षे बाधकमाह—अन्यथेत्यादिना ॥ १५० ॥

समाधानमिति, पूर्व्वसूत्रोक्तपूर्व्वपक्षस्य समाधानमित्यर्थः। उपाधिनाशे आत्मनि नाशव्यवहारः पूर्व्वसूत्रोक्तो नोपपद्यत इत्याह—नचेत्यादिना। अतिप्रसङ्गादिति, घटनाशेऽपि पटनाश-

---

এস্থলে বেদান্তিগণের পূর্ব্বপক্ষ এই যে—যেমন আকাশ এক হইলেও ঘটাদি উপাধিভেদে ঘটনাশে আকাশ বিনিষ্ট বলিয়া ব্যবহৃত হয়, সেইরূপ একাত্মপক্ষেও দেহভেদে কোন দেহরূপ উপাধিনাশে আত্মা বিনিষ্ট বলিয়া ব্যবহৃত ও কোন দেহরূপ উপাধির উৎপাদে আত্মা জাত বলিয়া ব্যবহৃত হইতে পারে, আত্মার নানাত্ববাদীর মতেও জন্মমরণাদিকে ব্যবহার মাত্রই বলিতে হইবে, নচেৎ আত্মার নিত্যত্বনিবন্ধন জন্মমরণাদি ব্যবস্থা হইবে কিরূপে ? ॥ ১৫০ ॥

উক্ত পূর্ব্ব পক্ষের উত্তর বলিতেছেন—"উপাধি দেহাদিই ভিন্ন, কিন্তু উপাধিমান্ আত্মা ভিন্ন নহে, সুতরাং উপাধিনাশে আত্মার নাশ ব্যবহার হইতে

अतिप्रसङ्गात् । एकात्मपक्षे च व्यक्त एव विरुद्धधर्माध्यासः, एकस्य बन्धमोक्षाभावात् । आकाशस्य तु धूमादियोगायोगौ अविरुद्धौ, संयोगस्याव्याप्यवृत्तित्वात् ॥ १५१ ॥

एतेन किं स्यात् ? इत्यत आह—

**एवमेकत्वे न परिवर्त्तमानस्य न विरुद्धधर्माध्यासः ॥ १५२ ॥**

न विरुद्धधर्माध्यासो भवति ॥ १५२ ॥

---

व्यवहारप्रसङ्गादित्यर्थः । एकात्मपक्षे दोषान्तरं दर्शयति—एकेत्यादिना । एकस्येति एककालावच्छेदेनेति शेषः, तथाच—"एककालावच्छेदेनैकमात्रवर्त्तमानत्व"मेवात्र विरुद्धत्वं, तच्च बन्धमोक्षयोरस्ति । ननु एकस्मिन्नपि आकाशे धूमादिसंयोगतदभावरूपौ विरुद्धधर्मौ स्यातामेवेत्यत आह—आकाशस्य तु इति । अविरोधहेतुं दर्शयति—संयोगस्याव्याप्यवृत्तित्वादिति, देशिकाव्याप्यवृत्तित्वशालिनोः भावाभावयोरेककालावच्छेदेनाप्येकत्र वर्त्तमानत्वेनाविरुद्धत्वादिति भावः ॥ १५१ ॥

सूत्रान्तरमवतारयति—एतेनेत्यादिना । एकत्वे अभ्युपगम्यमाने परि सर्व्वतः वर्त्तमानस्य देहादिसर्व्वोपाधिष्वनुगतस्यात्मनः विरुद्धधर्म्माध्यासो नेति न, किन्तु विरुद्धधर्म्माध्यासो दुष्परिहर एवेति सूत्रार्थः । ननु भवतु विरुद्धधर्म्माध्यासः,ततः किमित्याशङ्कां हृत्तिकारः अपनयति—नेत्यादिना । तथाच विरुद्धधर्म्माध्यासदोषापत्त्याप्येकात्मवादो नाङ्गीकर्त्तव्य इति भावः ॥ १५२

---

পারে না, কারণ একের নাশে অন্যের নাশ ব্যবহার স্বীকার করিলে ঘটাদিনাশে পটাদি নাশ ব্যবহাররূপ অতিপ্রসঙ্গ হয়। এবং একাত্মপক্ষে বিরুদ্ধধর্ম্মাধ্যাসরূপ দোষও সুব্যক্ত, কারণ এক কালাবচ্ছেদে একত্র থাকে না বিধায় বিরুদ্ধ বন্ধ ও মোক্ষ একেতে স্বীকার করিতে হয়। সংযোগের অব্যাপ্য বৃত্তিত্ব নিবন্ধন ধূমাদির সংযোগ ও তদভাব বিরুদ্ধ নহে। সুতরাং এক আকাশে সংযোগ এবং তদভাব স্বীকারে বিরুদ্ধ ধর্ম্মের অধ্যাস হয় না ॥১৫১ ॥

ইহা দ্বারা কি হইল ? এই আকাঙ্ক্ষায় বলিতেছেন—"আত্মার একত্ব স্বীকার করিলে সর্ব্বানুগত আত্মার যে বিরুদ্ধ ধর্ম্মাধ্যাস হয় না, তাহা নহে, বিরুদ্ধ ধর্ম্মাধ্যাস দোষ অপরিহার্য্যই হইয়া পড়ে" অথচ বিরুদ্ধ ধর্ম্মের অধ্যাস স্বীকার নহে ॥ ১৫২ ॥

অন্যধর্মস্যাপি অন্যত্র আরোপো দৃষ্টঃ, যথা প্রকৃতেঃ কর্তৃত্বং পুরুষে অতস্তৎ সূত্রমাহ—

अन्यधर्मत्वेऽपि नारोपात् तत्सिद्धिरेकत्वात् ॥ १५२॥

পুরুষকর্তৃত্বং ভ্রান্তং, অত্র পুরুষাকর্তৃত্বস্য সত্যত্বাৎ, আরোপস্য অসত্যত্বাৎ। ন চ সত্যাসত্যয়োঃ সম্বন্ধঃ তাত্ত্বিকো ভবতি। অসঙ্গিত্বাৎ আত্মনঃ ন জন্মমরণাদি সম্ভবতি ॥ ১৫২ ॥

সূত্রান্তরাবতরণিকামাহ—অন্যেত্যাদিনা, অন্যত্র—প্রকৃতেরন্যস্মিন্ পুরুষে, আরোপ্যত ইতি শেষঃ। তথাচ জন্মমরণসুখদুঃখাদীনামপি অন্যধর্মত্বেন একাত্মপক্ষেঽপি আত্মনি আরোপাজ্জন্মাদিব্যবস্থা ভবিষ্যতীত্যাশয়ঃ। "অন্যধর্মত্বেঽপি—জন্মাদীনাং দেহাদ্যুপাধিধর্মত্বেঽপি, ন জন্মাদিব্যবস্থাসিদ্ধিঃ, আরোপাৎ—পুরুষে কল্পনাৎ ন তৎসিদ্ধিঃ, একত্বাৎ—আরোপাধিষ্ঠানপুরুষস্য তন্মতে একত্বাদিতি সূত্রার্থঃ।" আরোপস্বীকারেঽপি আত্মনি জন্মারোপে সর্বেষাং জন্মব্যবহারাপত্তিরূপাব্যবস্থায়াঃ মরণাদ্যারোপে সর্বেষাং মরণাদিব্যবহারাপত্তিরূপাব্যবস্থায়াশ্চৈকাত্মপক্ষে জাগরূকত্বাদিতি ভাবঃ।

ননু অহং করোমীতি সর্বজনসিদ্ধানুভবাৎ কথং যথেত্যাদি দৃষ্টান্তসঙ্গতিরিতি তটস্থাশঙ্কা, তন্নিবারো নিরাকুরুতে—পুরুষেত্যাদিনা। ননু মাস্তু পুরুষে কর্তৃত্বং জন্মমরণাদিকন্তু পুরুষধর্ম এবাস্তু—ইতি তটস্থাশঙ্কাং নিরাকর্তুমাহ—অসঙ্গিত্বাদিত্যাদি ॥ ১৫২ ॥

একের ধর্মের ও অন্যত্র আরোপ হইতে দেখা যায়, যেমন প্রকৃতির ধর্ম কর্তৃত্বের প্রকৃতির অন্য পুরুষে আরোপ হইয়া থাকে, অতএব এই দৃষ্টান্তানুসারে অন্যান্য ধর্ম্ম জন্ম মরণাদির ও পুরুষে আরোপ করিয়া একাত্ম পক্ষেও জন্ম মরণাদির ব্যবস্থা করা যাইবে, এই আশঙ্কায় সমাধানসূত্র বলিতেছেন, —"জন্ম মরণ সুখ দুঃখাদি অন্য ধর্ম্ম হইলেও আরোপদ্বারা জন্মাদি ব্যবস্থার সিদ্ধি হইতে পারে না।" কারণ আরোপ স্বীকার করিলেও আরোপাধিষ্ঠান পুরুষের একত্ব নিবন্ধন দর্শিত জন্মাদির অব্যবস্থার পরিহার হইতে পারে না। পুরুষের কর্তৃত্বানুভব ভ্রমাত্মক, কারণ সাংখ্যমতে পুরুষের অকর্তৃত্বই যথার্থ, আরোপ কখনও সত্য হয় না, সত্যাসত্যের সম্বন্ধও যথার্থ হইতে পারে না। পুরুষের অসঙ্গত্বনিবন্ধন জন্ম মরণাদি পুরুষের ধর্ম্মও হইতে পারে না॥ ১৫২॥

एवं च श्रुतिविरोधः स्यात्। तथा च 'एकमेवाद्वितीयं ब्रह्म'। (छान्दोग्य उप ६ अध्याय २खण्ड प्रथममन्त्रः) "नेह नानास्ति किञ्चन, मृत्योः स मृत्युमाप्नोति। य इह नानेव पश्यति' (बृह उप ४ अध्याय ४ ब्राह्मण १९ मन्त्र) अतः आह—

**नाद्वैतश्रुतिविरोधो जातिपरत्वात् ॥ १५४ ॥**

व्यक्तम् ॥ १५४ ॥

ननु अनेकात्मवादिनोऽपि एकस्यात्मनो बन्धमोक्षौ विरुद्धौ इत्यत आह—

**विदितबन्धकारणस्य दृष्ट्या तद्रूपम् ॥ १५५ ॥**

विदितं बन्धकारणं प्रकृतिपुरुषविवेकादर्शनं यस्य, तस्य दृष्ट्या—विवेकज्ञानेन तद्रूपं—कैवल्यरूपम् ॥ १५५ ॥

सूत्रान्तरमवतारयितुमाह—एवञ्चेति। पुरुषनानात्वे चेत्यर्थः। "अद्वैतश्रुतीनां—आत्मैक्य-प्रतिपादिकानां श्रुतीनां विरोधो नास्ति, जातिपरत्वात्—जातिः—सामान्यं एकरूपत्वमिति यावत्, तत्परत्वात्—अद्वैतश्रुतीनां तत्तात्पर्य्या" दिति सूत्रार्थः। तथाचाद्वैतश्रुतिष्वेकादिशब्दाश्चि-देकरूपतामात्रपराः भेदशब्दाश्च वैधर्म्यलक्षणभेदपरा इति मन्तव्यम्। अथवा जातिपरत्वात् विजातीयद्वैतनिषेधपरत्वादित्यर्थः ॥ १५४ ॥

सूत्रान्तरमवतारयितुं शङ्कते—नन्वित्यादिना। सूत्रार्थं विवृणोति—विदितमित्यादिना ॥ १५५

---

পুরুষ যদি নানা হয়, তবে "একমেবাদ্বিতীয়ং" ইত্যাদি অদ্বৈত শ্রুতির বিরোধ হয়, এই আশঙ্কায় বলিতেছেন—"অদ্বৈত শ্রুতির জাতিপরত্ব নিবন্ধন অদ্বৈত শ্রুতির বিরোধ নাই।" ইহার তাৎপর্য্য এই যে অদ্বৈত শ্রুতিতে একাদি শব্দ যদি সজাতীয় দ্বিতীয় রহিতার্থক হয় ও নানাদি শব্দ যদি অনেকার্থক হয়, তবেই বিরোধ হয়, কিন্তু তাহা নহে, শ্রুতির একাদি শব্দের অর্থ একজাতীয় অর্থাৎ একরূপ এবং নানাদি শব্দের অর্থ বৈধর্ম্ম্য, সুতরাং বিরোধ নাই ॥ ১৫৪ ॥

অনেকাত্মবাদীর মতেই বা বিরুদ্ধ বন্ধ ও মোক্ষ এক আত্মার হয় কি প্রকারে? এই আশঙ্কায় বলিতেছেন—প্রকৃতি ও পুরুষের ভেদাদর্শনরূপ

विवेकादर्शननिमित्तो बन्धो न तात्त्विकः। दर्शनात् अदर्शनं निवर्त्तते इति युक्तिः। एवं च एकात्मपक्षे एव न्यायं पश्यामः, न नानात्मपक्षे, इत्यत्राह—

नान्धाऽदृष्ट्या चक्षुष्मतामनुपलम्भः॥ १५६॥

अन्धः न पश्यति इति चक्षुष्मान् अपि किं न उपलभते। नानात्मवादिनाम् अनेके न्यायाः सन्ति इत्यर्थः॥ १५६॥

इतोऽपि नानात्मान इत्याह—

वामदेवादिर्मुक्तः, नाद्वैतम्॥ १५७॥

पुराणादौ श्रुतं 'वामदेवः मुक्तः शुकः मुक्तः' इत्यादि। यदि एक एव आत्मा, एकमुक्तौ सर्वमुक्तिः भेदश्रुतिबाधः स्यात्॥ १५७॥

समाधानसूत्रमवतारयितुं पूर्व्वपक्षिणां शङ्कां दर्शयति—विविक्तेत्यादिना। बन्धस्यातात्त्विकत्वे विरुद्धधर्म्माध्यासादिदोषाभावादुक्तदोषाणामद्वैतवादिकात्मवाद एव न्याय्य इति पूर्व्वपक्षिणामाशयः। सूत्रतात्पर्य्यं विवृणोति—अन्धो नेत्यादिना। फलितमाह—नानात्मवादिनामित्यादिना॥ १५६॥

अनेके न्यायाः सन्तीति यदुक्तं तत्र कस्यचिन्न्यायस्य समुद्घाटकं सूत्रमवतारयति—इतोऽपीत्यादिना। "वामदेवो मुक्तः शुको मुक्तः" इत्यादि पुराणादिवाक्यार्थस्वरसतपन्यायादेव नाद्वैतमिति सूत्रतात्पर्य्यं। विपक्षे वाक्यार्थबाधरूपदोषं दर्शयति—यदीत्यादिना॥ १५७॥

---

বন্ধের কারণ যে আত্মার বিদিত হয়, বিবেক জ্ঞানদ্বারা সেই আত্মার কৈবল্য রূপের প্রকাশ পায়॥ ১৫৫॥

বিবেকাদর্শন যাহার নিমিত্ত, সেই বন্ধ তাত্ত্বিক নহে; বিবেকদর্শন হইতেই বিবেকাদর্শনের নিবৃত্তি হয়, ইহাই যুক্তি, সুতরাং বন্ধের অতাত্ত্বিকত্বনিবন্ধন পূর্ব্বোক্ত বিরুদ্ধ ধর্ম্মাধ্যাসরূপ দোষ হইতে পারে না, অতএব একাত্মপক্ষেই ন্যায্যাদি যুক্তি দেখাযায়, নানাত্ম পক্ষে কোনও যুক্তি দেখা যায় না, এই আশঙ্কায় বলিতেছেন—অন্ধগণ দেখে না বলিয়া যে চক্ষুষ্মান্ ব্যক্তিও দেখে না, তাহা নহে, অর্থাৎ একাত্মবাদিগণ দেখে না বলিয়াই যে নানাত্মবাদীর পক্ষে যুক্তি নাই, তাহা নহে, নানাত্মবাদীর পক্ষেও বহু যুক্তি আছে॥ ১৫৬॥

নানাত্মবাদীর পক্ষের যুক্তি বলিতেছেন, পুরাণাদিতে শুনাযায়—"বামদেব

नानात्मपक्षे अनादौ संसारे कदापि कः अपि मुच्यते इति क्रमेण सर्वमुक्तौ सर्वशून्यता स्यात्, एकात्मपक्षे तु उपाधिविगमः एव मोक्षः इत्यत आह—

**अनादावद्य यावदभावाद्भविष्यदप्येवम् ॥ १५८ ॥**

अनादौ संसारे अद्य यावत् शून्यतायाः अदर्शनात् भविष्यति मुक्तिः इति पक्षे नास्ति प्रमाणम् ॥ १५८ ॥

समाधानान्तरमाह—

**इदानीमिव सर्वत्र नात्यन्तोच्छेदः ॥ १५९ ॥**

अनन्तत्वात् आत्मनां क्रमेण मुक्तिः अपि स्यात्, संसारोच्छेदोऽपि न स्यात्। इदानीम् इव सर्वत्र भविष्यत्कालेऽपि मुक्तिः भविष्यति इति न अत्यन्तोच्छेदः स्यात्, प्रवाहनित्यत्वात्। उपाधिविगमो

---

सूत्रान्तरमवतारयितुं पूर्व्वपक्षिणामाक्षेपं दर्शयति—नानेत्यादिना। सूत्रतात्पर्य्यं विवृणोति—अनादावित्यादिना। शून्यताया अदर्शनादिति अभावादित्यस्य विवरणम्। भविष्यति मुक्तिरिति, सर्व्वेषामित्यादिः। नास्ति प्रमाणमिति, तथाच "भविष्यदपि एवं—शून्यताया अदर्शन"मिति सूत्रप्रतीकार्थं एवानेन समर्थित इति ध्येयम् ॥ १५८ ॥

समाधानान्तरमिति, पूर्व्वसूत्रावतरणिकोक्तपूर्व्वपक्षस्योत्तरान्तरमित्यर्थः। सूत्रस्य फलितार्थमाह—अनन्तत्वादित्यादिना। इममेवार्थं सूत्रव्याख्यानेन विशदयति—इदानीमित्यादिना, अत्र

---

মুক্ত, শুদ্ধ মুক্ত ইত্যাদি" যদি আত্মা এক হয় তবে একের মুক্তিতেই সকলের মুক্তিপ্রসঙ্গ হয় বলিয়া উক্ত ভেদশ্রুতির বাধ হয় ॥ ১৫৭ ॥

অনাদি সংসারে অবশ্যই কদাচিৎ কোন পুরুষের মুক্তি হয়, এইরূপভাবে ক্রমে সকলের মুক্তি হইলে নানাত্মবাদীর মতে সমস্ত শূন্য হইতে পারে। একাত্মবাদীর পক্ষে উপাধিবিগমের নামই মুক্তি, সুতরাং সর্ব্বশূন্যতাপত্তিরূপ দোষ হয় না, এই আশঙ্কায় বলিতেছেন, অনাদি সংসার অদ্য পর্য্যন্ত সর্ব্বশূন্য হইতে দেখা যায় নাই বিধায় সকলেরেই যে মুক্তি হইবে ইহাতে প্রমাণ নাই; সুতরাং ভবিষ্যৎকালেও সর্ব্বশূন্যতা হইবে না ॥ ১৫৮ ॥

সর্ব্বশূন্যতাপত্তিরূপ পূর্ব্বোক্ত পূর্ব্বপক্ষের উত্তরান্তর বলিতেছেন—আত্মার

मोक्षः इति पक्षेऽपि सर्वशून्यताप्रसङ्ग इति तुल्यो अनुयोगः । यथा नानात्मनां क्रमेण मुक्तौ सर्वोच्छेदः, तथा सर्वकर्मोच्छेदे सर्वोपाधिनाशात् जगत् शून्यं स्यात् । अथ उपाधीनाम् अनन्तत्वात् न शून्यता नानात्मपक्षेऽपि तुल्यत्वम् । तथा च—

अत एव हि विद्वत्सु मुच्यमानेषु सन्ततम् ।
ब्रह्माण्डजीवलोकानामनन्तत्वादशून्यता ॥ १५९ ॥

किमात्मा बद्धः मुक्तो वा ? बद्धत्वे स्वरूपस्य अप्रच्यवादनिर्मोक्षः, प्रच्यवे अनित्यत्वम् । मुक्तत्वे व्यर्थो ध्यानादिः इत्यत्राह—

**व्यावृत्तोभयरूपः ॥ १६० ॥**

न बद्धः नायं मुच्यते, किन्तु नित्यमुक्तः । अज्ञाननाशस्तु, ध्यानादिना क्रियते इति ॥ १६० ॥

---

हेतुं पूरयति प्रवाहनित्यत्वादिति, प्रवाहस्य सृष्टिप्रवाहस्य नित्यत्वात्—सदातनत्वादित्यर्थः । वेदान्तिना सिद्धान्तेऽपि अस्य प्रश्नस्य प्रकारान्तरेण दुरुत्तरत्वं दर्शयति—उपाधीत्यादिना । एतदर्थसमर्थकं वृद्धश्लोकमवतारयितुमाह—तथाचेति । श्लोकार्थस्तु स्पष्ट एवेति ध्येयम् ॥ १५९॥

सूत्रान्तरमवतारयितुं विकल्पयति—किमित्यादिना । अप्रच्यवात्—यावद्द्रव्यभावित्वे सा·

অনন্তত্ব নিবন্ধন ক্রমশঃ মুক্তি হইলেও সংসারের উচ্ছেদ হয় না। বর্ত্তমান কালের ন্যায় ভবিষ্যৎ কালেও মুক্তি হইবে কিন্তু সংসারের উচ্ছেদ হইবে না, কারণ সংসারের প্রবাহনিত্যতা আছে। উপাধিক্ষয়ের নাম মোক্ষ এইপক্ষেও সর্ব্বশূন্যতাপত্তিরূপ অনুযোগের তুল্যতা, কারণ যেমন ক্রমশঃ নানা আত্মার মুক্তি হইলে সর্ব্বোচ্ছেদ হইতে পারে, সেইরূপ ক্রমে সমস্ত কর্ম্মের উচ্ছেদ সমস্ত উপাধির নাশ হইলেও জগৎশূন্য হইতে পারে। যদি বল উপাধির অনন্তত্বনিবন্ধন শূন্যতা হইবে না, তবে আত্মার অনন্তত্ব নিবন্ধনও শূন্যতা হইবে না এই উত্তরও তুল্য। প্রাচীনেরাও বলিয়াছেন— বিদ্বান্ অর্থাৎ তত্ত্বজ্ঞানী ব্যক্তিগণ সর্ব্বদা মুক্ত হইলেও সংসার জীবলোকের অনন্তত্ব নিবন্ধন জগৎ শূন্য হয় না ॥ ১৫৯ ॥

আত্মা বদ্ধ কি মুক্ত ? যদি বদ্ধ হয়, তবে স্বরূপ বন্ধের নাশ হইতে পারে না

आत्मनः साक्षित्वमुक्तम् । प्राप्तविवेकस्यापि साक्षित्वे अनिर्मोक्ष इत्यत आह—

**साक्षात् सम्बन्धात् साक्षित्वम् ॥ १६१ ॥**

अक्षं इन्द्रियम् तत्सम्बन्धात् साक्षित्वम् । विवेके च न इन्द्रियसम्बन्धः इति ॥ १६१ ॥

सर्वदा किंरूपः आत्मा इत्यत आह—

**नित्यमुक्तत्वम् ॥ १६२ ॥**

स्पष्टम् ॥ १६२ ॥

---

विनाशात् । प्रच्यवे—विनाशे, अनित्यत्वमिति, आत्मनः स्यादिति शेषः । स्वरूपनाशो द्रव्यनाशावश्यम्भावादिति भावः । व्यावृत्ते बद्धत्वमुक्तत्वोभयरूपे यस्मात् स व्यावृत्तोभयरूप इति विग्रहं मनसि कृत्य सूत्रस्य फलितार्थमाह—न बद्धः नायं मुच्यत इति । तर्हि किंस्वरूपः? इत्याकाङ्क्षायां सूत्रकारेण वक्ष्यमाणमेव नित्यमुक्तत्वमात्मन इह प्रकटयितुमाह—किन्तु नित्यमुक्त इति । "मुक्तत्वे व्यर्थो ध्यानादि"रिति पूर्व्वपक्षस्य समाधानमाह—अज्ञानेत्यादिना ॥ १६० ॥

सूत्रान्तरावतरणिकामाह—आत्मन इत्यादिना । अक्षेण इन्द्रियेण सह वर्त्तमानं साक्षं तस्मात् साक्षादिति सम्बन्धविशेषणमभिसन्धाय पदद्वयस्यार्थमाह—अक्षमित्यादिना । फलितमाह—विवेके चेत्यादिना । तथाच प्राप्तविवेकस्य इन्द्रियसम्बन्धाभावान्नास्ति साक्षित्वं नास्ति च सुतरामनिर्मोक्षप्रसङ्ग इति भावः ॥ १६१ ॥

বলিয়া মুক্তি হইতে পারে না। স্বরূপের নাশ স্বীকার করিলে তাহার যাবদ্দ্রব্যভাবিত্ব নিবন্ধন আত্মার অনিত্যত্ব প্রমাণ হয়। যদি মুক্ত হয়, তবে (মুক্তির সাধক) ধ্যানাদি ব্যর্থ হইয়া যায়। এই আশঙ্কায় বলিতেছেন—আত্মা বদ্ধ নহে, সুতরাং মুক্ত হইবেনও না, কিন্তু নিত্যই মুক্ত। ধ্যানাদি দ্বারা অজ্ঞানের নাশ হয় ॥ ১৬০ ॥

আত্মার সাক্ষিত্ব উক্ত হইয়াছে, বিবেক লাভ করিলেও যদি সাক্ষিত্ব থাকে, তবে মুক্তি হইতে পারে না, এই আশঙ্কায় বলিতেছেন—ইন্দ্রিয় সম্বন্ধ বশতঃই আত্মা সাক্ষী হন, বিবেক লাভ করিলে ইন্দ্রিয় সম্বন্ধ কোথায়? সুতরাং মুক্তি হইতেও কোন বাধা নাই ॥ ১৬১ ॥

**औदासीन्यं चेति ॥ १६३ ॥**

व्यक्तम् ॥ १६३ ॥

आत्मनः कर्त्तृत्वं श्रूयते, तत् कथम् ? इत्यत आह—

**उपरागात् कर्त्तृत्वं चित्सान्निध्याच्चित्सान्निध्यात् ॥ १६४ ॥**

चित्सान्निध्येन प्रकृत्युपरागात् आत्मनः कर्त्तृत्वं कर्त्तृत्वाभिमानः । चित्सान्निध्यात् इति वीप्सा परिसमाप्तौ, श्रुतौ तथा दृष्टत्वात् इति ॥ १६४ ॥

इति कापिलसांख्यप्रवचनसूत्रवृत्तौ

विषयाध्यायः * प्रथमः ॥

---

आत्मस्वरूपनिरूपकं सूत्रद्वयमवतारयति—सर्व्वदेत्यादिना । नित्यमुक्तत्वं—दुःखात्यन्तबन्धशून्यत्वं औदासीन्यं—अकर्त्तृत्वञ्च आत्मनः स्वरूपमिति सूत्रद्वयार्थः । "इति शब्दः पुरुषधर्म्मप्रतिपादनसमाप्तौ" इति भाष्यकारः ॥ १६२—१६३ ॥

सूत्रान्तरमवतारयति—आत्मन इत्यादिना । कथमिति, औदासीन्यस्यैव व्यवस्थापितत्वादिति भावः । सूत्रार्थमाह—चित्सान्निध्येनेत्यादिना । तथाच वास्तवकर्त्तृत्वं पुरुषे नास्तीत्येव सांख्यसिद्धान्तः । कर्त्तृत्वश्रुतिश्चाभिमानिककर्त्तृत्वप्रतिपादिकेत्येव ध्येयम् । अत्र सूत्रे "पुरुषस्य यत्कर्त्तृत्वं तद्बुद्ध्या-

---

সর্ব্বদা আত্মার স্বরূপ কি ? এই আশঙ্কায় বলিতেছেন—নিত্য, মুক্তত্ব ও ঔদাসীন্যই আত্মার স্বরূপ ॥ ১৬২ ॥ ॥ ১৬৩ ॥

( ঔদাসীন্যই যদি আত্মার স্বরূপ হয় তবে ) আত্মার যে কর্ত্তৃত্ব শ্রুত হয় তাহার উপপত্তি হয় কিরূপে ? এই আশঙ্কায় বলিতেছেন—চিৎসান্নিধ্যবশতঃ প্রকৃতির উপরাগে আত্মার কর্ত্তৃত্বাভিমান হয়, ( বস্তুতঃ আত্মার কর্ত্তৃত্ব নাই ) সেই আভিমানিক কর্ত্তৃত্বই কর্ত্তৃত্বশ্রুতির অর্থ । চিৎসান্নিধ্যাৎ চিৎসান্নিধ্যাৎ

---

एतदध्यायविषयसंग्राहकश्लोकौ भाष्यकारोक्तौ यथा—

द्वयज्ञाने तयोर्हेतु इति व्याख्या यथाक्रमम् ।

चत्वारः शास्त्रमुख्यार्था अध्यायेऽस्मिन्निरूपिताः

## अथ विषयनिरूपणानन्तरं प्रधानकार्य्य-निरूपणार्थं द्वितीयाध्यायारम्भः ॥

**विमुक्तविमोक्षार्थं स्वार्थं वा प्रधानस्य ॥ १ ॥**

स्वभावविमुक्तः आत्मा। तस्याभिमानिकबन्धविमोक्षार्थं प्रधानस्य जगत्कर्त्तृत्वम्। अयं भावः दुःखसृष्टौ स्वभावादेव वैराग्यात् मोक्षे वै पुरुषः प्रवर्त्तते। सुखसृष्टौ च दुःखप्राबल्यात् सुखस्यापि दुःख-

---

परागात् बुद्धेश्च या चिन्ता सा पुरुषसान्निध्या" दिति यथासंख्यान्वयो भाष्यसम्मतः। तथा—अध्यायसमाप्तिसूचकवीप्‌साया: ॥ १६४ ॥

इति श्रीकृष्णविहारितर्कसिद्धान्तभट्टाचार्य्यविरचितायां कापिलसांख्यसूत्रानिरुद्धवृत्ति-टीकायां तत्त्वबोधिनीसमाख्यायां विषयाध्यायः प्रथमः ॥

---

द्वितीयाध्यायारम्भावतरणिकामाह—अथेत्यादिना। आनन्तर्य्यार्थस्याथशब्दस्यैव विवरणं विषयनिरूपनानन्तरमिति, प्रथमाध्यायेनेत्यादिः। "विकारं प्रकृतिञ्चैव पुरुषञ्च सनातनम्। यो यथावद्विजानाति स वितृष्णो विमुच्यते ॥" इत्यादि विष्णुधर्म्मोत्तरादिवचनेभ्यो मोक्षोपयोगितया विषयनिरूपणं प्रधानकार्य्यनिरूपणञ्च न विरुद्धमिति मन्तव्यम्।

तत्रादौ जगत्सर्ज्जनप्रयोजनप्रदर्शनपरं सूत्रं व्याचष्टे—स्वभावेत्यादिना। स्वभावतस्त-

এইরূপ দুইবার পাঠ অধ্যায়পরিসমাপ্তির সূচক, শ্রুতিতেও অধ্যায়ের শেষ শব্দের দুইবার পাঠ দেখা যায় ॥ ১৬৪ ॥

কপিলকৃত সাংখ্যপ্রবচনসূত্রের বিষয়নিরূপক প্রথমাধ্যায়ের বৃত্তি সমাপ্ত হইল ॥

---

বিষয় নিরূপণের পর প্রধান কার্য্যের নিরূপণের নিমিত্ত দ্বিতীয় অধ্যায়ের আরম্ভ।

আত্মা স্বভাবতঃই বিমুক্ত, তাহার আভিমানিক বন্ধনিবৃত্তির জন্যই প্রকৃতির

पक्षनिक्षेपात् वैराग्यमेव उपजायते। तत् चतुर्विधं, यतमानसंज्ञा, व्यतिरेकसंज्ञा, एकेन्द्रियसंज्ञा, वशीकारसंज्ञा चेति। हेयं दुःखमनागतम् एकविंशतिप्रकारम्, तथाहि—शरीरं षडिन्द्रियाणि, षड् विषयाः, षड् बुद्धयः, सुखं दुःखं च इति। तत्र शरीरं दुःखायतनत्वात् दुःखं, इन्द्रियाणि विषयाः बुद्धयश्च तत्साधनभावात् सुखं

---

दात्मा विमुक्तस्तदा कथं तद्विमोक्षार्थं प्रधानस्य जगत्कर्त्तृत्वमुपपद्यत इति शङ्कापनोदनाय विमोक्षार्थमिति पदं व्याचष्टे—आभिमानिकेत्यादिना, शेषं पूरयति—जगत्कर्त्तृत्वमिति। विमुक्तविमोक्षार्थमित्यस्य तात्पर्य्यं विवदयति—अयं भाव इत्यादिना। दुःखसृष्टौ—प्रधानेन दुःखसर्जने सति, स्वभावात्—स्वतः सिद्धात्, दुःखस्य स्वभावत एव हेयविषयत्वादिति भावः। प्रवर्त्तते—बुद्धौ प्रतिविम्बितत्वादौपाधिकप्रवृत्तिमान् भवति, तथाच प्रवृत्तेः बुद्धिधर्म्मत्वेऽपि न विरोधः। एवं दुःखसृष्टेर्म्मोक्षार्थत्वमुपपाद्य सुखसृष्टेरपि मोक्षार्थत्वमुपपादयति—सुखेत्यादिना। दुःखशबलत्वात्—दुःखविमिश्रितत्वात्, वैराग्यमेव—सुखेऽपि विरक्तिरेवेत्यर्थः। तत्—वैराग्यं, चातुर्व्विध्यमेव दर्शयति—यतमानसंज्ञेत्यादिना,। तथाच—कषायैश्चित्तवर्त्तिभी रागादिभिरिन्द्रियाणि यथास्वं विषयेषु प्रवर्त्तन्ते, यथा च न प्रवर्त्तेरन् तत्परिपाचनाय प्रयत्नो यतमानसंज्ञानामवैराग्यम्। तदारम्भे च केचित् कषायाः पक्काः केचित् पच्यन्ते, केचित्त पक्ष्यन्ते, तत्र पच्यमानेभ्यः पक्कानां व्यतिरेकेणावधारणं व्यतिरेकसंज्ञा नाम वैराग्यं। इन्द्रियप्रवर्त्तनासमर्थत्वेन पक्कानां औत्सुक्यमात्रेण मनसि व्यवस्थापनमेकेन्द्रियसंज्ञानाम वैराग्यम्। निरुक्तसंज्ञा-

---

জগৎকর্তৃত্ব। ইহার তাৎপর্য্য এই যে, দুঃখের সৃষ্টি হইলে দুঃখে স্বাভাবিক বৈরাগ্য বশতঃই পুরুষের মোক্ষে প্রবৃত্তি হয়। সুখের সৃষ্টি হইলেও দুঃখ বিমিশ্রিতত্ব নিবন্ধন সুখেরও দুঃখ পক্ষে নিক্ষেপ বশতঃ বৈরাগ্যই জন্মিয়া থাকে। সেই বৈরাগ্য যতমান সংজ্ঞা, ব্যতিরেক সংজ্ঞা, একেন্দ্রিয় সংজ্ঞা ও বশীকারসংজ্ঞা ভেদে চতুর্ব্বিধ। (যতমান সংজ্ঞাদির লক্ষণ টীকায় দ্রষ্টব্য) অতীত ও বর্ত্তমান দুঃখের ত্যাগ অসম্ভব, সুতরাং অনাগত দুঃখই হেয়, অর্থাৎ যে দুঃখ হইবার সম্ভাবনা আছে, তাহা যাহাতে হইতে না পায়, তাহাই কর্ত্তব্য। দুঃখ একবিংশতি প্রকার, যথা শরীর ১ চক্ষুরাদি ভেদে (প্রত্যক্ষের জনক) ইন্দ্রিয় ৬, ষড়্‌বিধ প্রত্যক্ষের বিষয় ৬, বুদ্ধি অর্থাৎ প্রত্যক্ষ ৬, সুখ ও ১, দুঃখ ১। ইহাদের মধ্যে শরীর দুঃখের আশ্রয়ত্ব নিবন্ধন দুঃখ, ইন্দ্রিয় বিষয় ও

दुःखानुषङ्गात्, दुःखं यातनापीड़ासन्तापात्मकं मुख्यतः एवेति। तस्य निर्वर्त्तकम् असाधारणं कारणम् अविद्या, तृष्णे धर्म्माधर्मौ इति। अविद्याविपरीतज्ञानं तत्संस्कारश्च विद्वद्भिः उक्तः तृष्णादीनाम् असाधारणो हेतुः। दुःखहानं च दुःखोत्पत्तिनिवृत्तिः आत्यन्तिकी। तस्य उपायः तत्त्वज्ञानम् आत्मविषयं, ततः अविद्याया निवृत्तेः। तथा च उक्तं "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" ( वृह उप २ अध्याय ४ब्रा ५ मन्त्रः)

तथाहिना औत्सुक्यमात्रेणापि निवृत्तिः उपस्थितेष्वपि दिव्यादिष्वविशयेषु उपेक्षाबुद्धिः वशी-कारसंज्ञानामवैराग्यम्। अतीतदुःखस्योपभोगेनातिवाहितत्वेन हेयत्वासम्भवाद्वर्त्तमानदुःखस्य च स्वक्षणे भोगरूपत्वेन हेयत्वासम्भवादाह—अनागतमिति। दुःखस्यैकविंशतिप्रकारत्वं दर्शयति—शरीरमित्यादिना। शरीरादीनां दुःखत्वं प्रतिपादयति—तत्रेत्यादिना, दुःखायतनत्वात्—अवच्छे-दकतासम्बन्धेन दुःखाश्रयत्वात, तत्साधनभावात्—दुःखसाधनत्वात, दुःखमित्यन्वयः। दुःखानु-सङ्गात्—दुःखानुबन्धात, तत्रापि दुःखमित्यनुवर्त्तनीयं। एवं शरीरादीनां सुखान्तानामौपचारिकं दुःखत्वं प्रतिपाद्य यातनापीड़ासन्तापात्मकस्य सर्व्वानुभवसिद्धदुःखस्य मुख्यत्वमाह—दुःख-मित्यादिना। तस्य—दुःखस्य,निर्व्वर्त्तकं—सम्पादकं। अविद्याया ज्ञानाभावात्मकत्वशङ्कानिरासाय अविद्यापदार्थं निर्व्वक्ति--विपरीतज्ञानमिति। मिथ्याज्ञानमित्यर्थः, तत्संस्कारः—अविद्याजनित-संस्कारः, चकारः अविद्यायाः समुच्चायकः, आदिपदेन धर्म्माधर्म्मयोरुपग्रहः। दुःखहानस्वरूप-माह—दुःखेत्यादिना, सुषुप्त्यादावपि कादाचित्की दुःखनिवृत्तिरस्त्येवेत्यत आह—आत्यन्तिकीति,

বুদ্ধি দুঃখসাধনত্ব নিবন্ধন দুঃখ, এবং সুখ দুঃখ বিমিশ্রিতত্ব নিবন্ধন দুঃখ, অর্থাৎ ইহারা মুখ্যতঃ দুঃখ না হইলেও দুঃখের আয়তনত্বাদি নিবন্ধন দুঃখরূপে যাতনা পীড়া ও সন্তাপাত্মক দুঃখ মুখ্যতঃই দুঃখরূপে গণ্য। সেই দুঃখের সম্পাদক অসাধারণ কারণ অবিদ্যা, তৃষ্ণা, ধর্ম্ম ও অধর্ম্ম। বিদ্বান্‌গণ বলিয়াছেন—মিথ্যাজ্ঞানাত্মক অবিদ্যা ও তজ্জনিত সংস্কার তৃষ্ণাদির অসাধারণ কারণ। আত্যন্তিক দুঃখোৎপত্তিনিবৃত্তিই দুঃখহান পদবাচ্য। সেই দুঃখহানের উপায় আত্মবিষয়ক তত্ত্বজ্ঞান, যেহেতু সেই তত্ত্বজ্ঞান হইতেই অবিদ্যার নিবৃত্তি হয়। উপনিষদেও উক্ত হইয়াছে—"আত্মাই সাক্ষাৎ করণীয়, সুতরাং শ্রবণ, অনুমান ও পরিচিন্তন অবশ্য কর্ত্তব্য।" পরন্তু "শ্রুতি

'श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।
मत्वा च सततं ध्येय एते दर्शनहेतवः'॥

'तरति शोकमात्मवित्' इति (छान्दो उप ७म अध्याय १म खण्ड ३य मन्त्र) सः द्विविधः परश्च अपरश्च इति। तथा च उक्तं 'द्वे ब्रह्मणी वेदितव्ये, परं चापरमेव च, इति। विद्यैश्वर्य्यविशिष्टः संसारधर्म्मैः ईषत् अपि असंस्पृष्टः परं भगवान् महेश्वरः सर्वज्ञः सकलजननात् विधाता। स कथं ज्ञातव्यः अनुमानात् वा योगाद्वा

---

आत्यन्तिकत्वञ्च प्रथमसूत्रव्याख्यानावसर एव प्रपञ्चितम्। तस्य—दुःखहानस्य, आत्मविषयं ज्ञानतत्कार्य्यभिन्नत्वेन पुरुषगोचरं, ततः—तत्त्वज्ञानात् आत्मज्ञानस्य मोक्षोपयोगित्वे प्रमाणं दर्शयितुमाह—तथा चेति। उपपत्तिभिः—बहुभिर्हेतुभिः मन्तव्यः—अनुमातव्यः, एते—श्रवणादयः, दर्शनहेतवः—साक्षात्कारकारणानीत्यर्थः। आत्मनो विभागं दर्शयति—स इत्यादिना। तत्र परमात्मलक्षणमाह—विद्यैश्वर्य्येत्यादिना, तथाच योगसूत्रम्—"क्लेशकर्म्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर" इति। ईश्वरानुमितिप्रकारं दर्शयितुमाह—तथा·

বাক্য হইতে শ্রবণ বহু হেতু দ্বারা মনন ও মননের পর সর্ব্বদা চিন্তা করিতে হইবে, শ্রবণাদিই আত্মসাক্ষাৎকারের হেতু।" "আত্মজ্ঞানশালী ব্যক্তি শোক হইতে উত্তীর্ণ হয়।" সেই আত্মা পরাপরভেদে দ্বিবিধ, তাই উক্ত হইয়াছে—"পরমাত্মা ও জীবাত্মা উভয়ই জ্ঞাতব্য।" সেই পরম ভগবান্ মহেশ্বর বিদ্যৈশ্বর্য্যসম্পন্ন সামান্য রূপেও সংসার ধর্ম্ম দ্বারা অসংস্পৃষ্ট সর্ব্বজ্ঞ ও সকলের জনক বিধায় বিধাতা। প্রশ্ন সেই পরমাত্মা কিরূপে জ্ঞাতব্য? উত্তর অনুমান অথবা যোগ হইতে জ্ঞাতব্য। অনুমান যথা—বিবাদাস্পদীভূত উপলব্ধ বস্তু মাত্রেরই কোন কারণ আছে, যে হেতু উহারা প্রাগভাবের প্রতিযোগী হইয়া বর্ত্তমান, যে যে প্রাগভাবের প্রতিযোগী হইয়া বর্ত্তমান সেই সেই সকর্ত্তৃক যেমন চিত্র। সেই কারণই পরমাত্মা। এইরূপ অনুমান হইতে সামান্যরূপে জ্ঞাত ভগবানের বিশেষরূপে জ্ঞান যোগদ্বারাই হইয়া থাকে। নিজের মানস প্রত্যক্ষ হইতেই জীবাত্মার সিদ্ধি হইয়া থাকে। সেই পরমাত্মা ও জীবাত্মার বিবেক জ্ঞানের নিমিত্তই প্রকৃতির প্রবৃত্তি। এই প্রবৃত্তির পরার্থতা বলা হইবে। প্রকৃতি যেই পুরুষের প্রতি বিবেক দ্বারা নিজকে

तथा हि, विवादाध्यासितम् उपलब्धं सकारणकं, अभूत्वा भावित्वात्, चित्रवत् इति अनुमानम्। ततः सामान्येन अवगतस्य योगेन विशेषतः ज्ञानम्। अपरस्य जीवस्य स्वानुभवात् एव सिद्धिः। तयोश्च परापरयोः विवेकज्ञानाय प्रकृतेः प्रवृत्तिः। तत्र परार्थता वक्ष्यते, स्वार्थता च, सा यं पुरुषं प्रति आत्मानं विवेकेन दर्शितवती, तं प्रति उदास्ते।' अचेतनायाः प्रकृतेः कथं प्रवृत्तिः? दृष्टम् अचेतनानामपि वृक्षाणां फलादिद्वारेण प्रवृत्तिः इति॥ १॥

---

हीति। अभूत्वा भावित्वादिति, प्रागभावप्रतियोगित्वे सति वर्त्तमानत्वादित्यर्थः। ततः—अनुमानात्, सामान्येन—कारणत्वेन, विशेषतः—इतरवैलक्षण्येन। जीवात्मनि तु स्वीयमानसप्रत्यक्षमेव प्रमाणमिति दर्शयन्नाह—अपरस्येत्यादि। तयोः परापरयोः—जीवात्मपरमात्मनोः, विवेकज्ञानाय—मिथो विविक्तस्य रूपप्रतिपत्तये। तत्र—प्रकृतेः प्रवृत्तौ, परार्थता—पुरुषस्याभिमानिकबन्धनिवृत्तिरूपप्रयोजनता, वक्ष्यते षष्ठाध्याये प्रतिपादयिष्यते। स्वार्थं चेति सूत्रप्रतीकव्याख्यानायाह—स्वार्थता चेत्यादि, सा—प्रकृतिः, तथाच भुक्तभोगान् जीवान् प्रति औदासीन्यमेव प्रकृतिप्रवृत्तेः स्वार्थतेति भावः।

अत्रैतदवधेयम्—यदत्रात्मनो विभागकरणं परमात्मस्वरूपनिरूपणं परस्य ब्रह्मणो वेद्यत्वाभिधानं तदर्थमनुमानादिप्रदर्शनं प्रधानप्रवृत्तेः परापरविवेकार्थत्वप्रदर्शनञ्च तन्निरीश्वरसांख्यमते कथमपि नोपपद्यत इति "अयं भाव इत्यादि वक्ष्यत इत्यन्तग्रन्थः" केनचित् सेश्वरदर्शनप्रणयशालिना प्रक्षिप्त इति प्रतिभाति। समूलत्वे तु वृत्तिकृतैव तन्मतानुसारेणायमंशो लिखित इत्यगत्याकथञ्चिदभ्युपेतव्यमिति॥ १॥

দেখাইয়া থাকেন, সেই পুরুষের প্রতিই ঔদাসীন্য অবলম্বন করেন, সেই ঔদাসীন্যই প্রকৃতি প্রবৃত্তির স্বার্থতা। প্রশ্ন অচেতন প্রকৃতির প্রবৃত্তি হয় কিরূপে? উত্তর অচেতন বৃক্ষাদিরও ফলাদি দ্বারা প্রবৃত্তি দেখা যায়।

এই স্থলে জ্ঞাতব্য এই যে, উল্লিখিত আত্মার বিভাগ, পরমাত্মার স্বরূপনিরূপণ, পরমাত্মার বেদ্যত্বাভিধান, পরমাত্মা বিষয়ক অনুমানাদি প্রদর্শন, ও জীবাত্মা পরমাত্মা বিবেকরূপ পরার্থত্ব প্রদর্শন নিরীশ্বর সাংখ্যমতে কোনরূপেই উপপন্ন হইতে পারে না, সুতরাং "অয়ং ভাব" হইতে "পরার্থতা বক্ষ্যতে" পর্য্যন্ত বৃত্তিগ্রন্থ কোনও সেশ্বরদর্শনপ্রণয়ী ব্যক্তি কর্ত্তৃক প্রক্ষিপ্ত।

অথ কে মোক্ষাধিকারিণঃ ইত্যত্রাহ —

**বিরক্তস্য তৎসিদ্ধেঃ ॥ ২ ॥**

তথা চ শ্রুতিঃ "পুত্রৈষণায়াশ্চ বিত্তৈষণায়াশ্চ লোকৈষণায়াশ্চ ব্যুত্থায় অথ ভিক্ষাচর্য্যং চরন্তি" ইতি ( বৃহ উপ ৩ অধ্যায় ৫ ব্রা ১ মন্ত্র ) শান্তো দান্ত উপরতঃ তিতিক্ষুঃ সমাহিতো ভূত্বা আত্মনি এব আত্মানং পশ্যতি" ॥ ২ ॥ ( বৃহ উপ ৪ অঃ, ৪ ব্রা, ২৩ মন্ত্র )

---

প্রসঙ্গান্মোক্ষাধিকারিনিরূপকং সূত্রমবতারয়তি—অথেত্যাদিনা। সূত্রে তদিতি পদং মোক্ষপরম্, তথাচ বিরক্তা এব মোক্ষাধিকারিণ ইতি শেষঃ। অত্রার্থে শ্রুতিং দর্শয়িতুমাহ—তথাচেতি।" পুত্রৈষণায়াঃ—আত্মনঃ পারলৌকিকভোগবিষয়িণ্যাঃ কামনায়াঃ, বিত্তৈষণায়াঃ—ঐহিকভোগমাত্রবিষয়িণ্যাঃ কামনায়াঃ, লোকৈষণায়াঃ—যশোবিষয়িণ্যাঃ কামনায়াঃ, ব্যুত্থায় বিরজ্য, ভিক্ষাচর্য্যং—সন্ন্যাসং চরন্তি—অনুতিষ্ঠন্তী"তি শ্রুত্যর্থঃ। নন্বনয়া বিরক্তস্য সন্ন্যাসিত্বপ্রতিপাদনেঽপি কথং মোক্ষাধিকারিত্বমিত্যাশঙ্কায়াং সন্ন্যাসিনো মোক্ষপ্রতিপাদিকাং শ্রুতিমুত্থাপয়তি—শান্ত ইতি। শান্তঃ—শমবান্, দান্তঃ—দমবান্, উপরতঃ—সন্ন্যাসী, তিতিক্ষুঃ—শীতোষ্ণাদিসহিষ্ণুঃ, সমাহিতঃ—সমাধিমান্, পশ্যতি—মনসা সাক্ষাৎকরোতীত্যর্থঃ, আত্মনো রূপাদিশূন্যত্বেন চাক্ষুষপ্রত্যক্ষবিষয়ত্বাযোগাৎ। তথাচাত্মসাক্ষাৎকারমন্তরেণ মোক্ষস্য সন্ন্যাসিত্বমন্তরেণাত্মসাক্ষাৎকারস্য বিরক্তিমন্তরেণ চ সন্ন্যাসিত্বস্যাসম্ভবাৎ সিদ্ধং বিরক্তা এব মোক্ষাধিকারিণ ইতি ধ্যেয়ম্ ॥ ২ ॥

এই অংশের সমূলত্ব স্বীকার করিলেও বৃত্তিকার যে সেশ্বরদর্শন মতাবলম্বনেই এই অংশ লিখিয়াছেন, ইহা অবশ্যই অগত্যা স্বীকার করিতে হইবে। সুতরাং দার্শনিকগণের উপরেই ইহার বিচারের ভার ন্যস্ত হইল ॥ ১ ॥

মোক্ষের অধিকারী কে? এবিষয়ে বলিতেছেন—"বিরক্ত ব্যক্তিরই মোক্ষ সিদ্ধি হয় বিধায় বিরক্তই মোক্ষের অধিকারী।" এবিষয়ে শ্রুতিও আছে—"নিজের পারলৌকিক ভোগবিষয়ক কামনা হইতে ঐহিক ভোগবিষয়ক কামনা হইতে ও যশোবিষয়ক কামনা হইতে বিরক্ত হইয়াই পরে সন্ন্যাসের অনুষ্ঠান করে।" "শমদমশালী সন্ন্যাসী শীতোষ্ণাদি সহিষ্ণু ও সমাহিত হইয়াই আত্মাতে আত্মদর্শন অর্থাৎ বিশুদ্ধ আত্মার মানস প্রত্যক্ষ করে" ॥ ২ ॥

यदि वैराग्यात् श्रवणानन्तरं मोक्षः तदा सर्व्वेषां गुरूपदेशानन्तरं मोक्षः स्यात्? न च एवं दृश्यते इत्यत्राह—

**न श्रवणमात्रात्तत्सिद्धिरनादिवासनाया बलवत्त्वात् ॥ ३ ॥**

न श्रवणानन्तरं मोक्षः, अनादिवासनाया बलवत्त्वात्, यस्य तु सा नदृढ़ा तस्य क्षिप्रं मुक्तिः, अन्यत्र चिरात् इति ॥ ३ ॥

युक्त्यन्तरमाह—

**बहुभृत्यवद्वा प्रत्येकम् ॥ ४ ॥**

यथा एकस्य बहवो भृत्याः आराधनापराधाभ्यां केचित् मुच्यन्ते केचित् प्रसादभाजः केचित् बध्यन्ते, तथा प्रकृतिः एका पुरुषाश्च

---

सूत्रान्तरमवतारयति—यदीत्यादिना। एवं—श्रवणानन्तरमेव सर्व्वेषां मोक्षः। सूत्रतात्पर्यं विवृणोति—नेत्यादिना। न मोक्ष इति, सर्व्वेषामेवेत्यादिः। सा—वासना, न दृढ़ा—जन्मान्तरकृतात्मतत्त्वानुसन्धानेन शैथिल्या, क्षिप्रं श्रवणमात्रमेव, अन्यत्र—वासनायां शैथिल्याभावे चिरात्—सन्ततश्रवणाभ्यासनिदिध्यासनादिसाध्यवासनाविनाशकालविलम्बात्। तथाच वासनाविनाशमन्तरेण कस्यापि न मुक्तिः, यस्य तु सा वासना न दृढ़ा तस्य श्रवणमात्रेण तद्विनाशादचिरान्मुक्तिः, यस्य तु सा दृढ़ा तस्य श्रवणमात्रेण वासनाया अविनाशात्तद्विनाशार्थं मननादीनामपेक्षणात् कालविलम्बेन मुक्तिरिति भावः ॥ ३ ॥

युक्त्यन्तरमिति, न श्रवणमात्रेण सर्व्वेषामेव मुक्तिरित्यत्र हेत्वन्तरमित्यर्थः। दृष्टान्तोद्घाट-

---

যদি বৈরাগ্য বশতঃ শ্রবণের অনন্তরই মুক্তি হয়? তবে সকলেরই গুরূপ-দেশের পরে মুক্তি হউক, কিন্তু সকলেরত মুক্তি হইতে শুনা যায় না, এই আশঙ্কায় বলিতেছেন—শ্রবণের অনন্তরই সকলের মুক্তি হইবে না, কারণ অনাদি বাসনাই বলবং। কিন্তু যাহার সেই বাসনা জন্মান্তরকৃতাত্মতত্ত্বানুসন্ধান দ্বারা শিথিল, তাহার শীঘ্র অর্থাৎ শ্রবণের পরেই বাসনার বিনাশে মুক্তি হইবে, যাহার সেই বাসনা দৃঢ়, তাহার কালবিলম্বে অর্থাৎ নিরন্তরাভ্যাস ও নিদিধ্যাসনাদি দ্বারা বহুকালে সেই বাসনার বিনাশ হইলে পরে মুক্তি হইবে ॥ ৩ ॥

শ্রবণমাত্রেই যে সকলের মুক্তি হইবে না এবিষয়ে আরও যুক্তি বলিতে-

बहव: इति। येषां स्पष्टं विवेकज्ञानं तेषां शीघ्रं, येषाम् उपासनामात्रं तेषां क्रमेण, अन्येषां नास्ति एव ॥ ४ ॥

कूटस्थत्वादात्मनो बन्धो नास्त्येव इत्यत्राह—

**प्रकृतिवास्तवे च पुरुषस्याध्याससिद्धिः ॥ ५ ॥**

प्रकृतिः यं प्रति आत्मानं दर्शितवती, तं प्रति प्रकृतेः अप्रवर्त्तनं मोक्षः। यं प्रति प्रवर्त्तते तं प्रति पुरुषच्छायापत्तिः एव अध्यासः, न तात्त्विकः। तथा च—

यद्यात्मा मलिनोऽस्वच्छो विकारी स्यात् स्वभावतः।
न हि तस्य भवेन्मुक्तिर्जन्मान्तरशतैरपि ॥ ५ ॥

---

तेन सूत्रतात्पर्यं विवृणोति—यथैत्यादिना। शीघ्रमिति मुक्तिरिति शेषः, एवमुत्तरत्रापि ॥४

सूत्रान्तरमवतारयति—कूटस्थत्वादित्यादिना। "प्रकृतेः—प्रधानस्य, वास्तवे—तात्त्विके, बन्धे सतीति शेषः, अध्याससिद्धिः—बन्धाध्याससिद्धिः, तथाच प्रकृतेरेव तात्त्विको बन्धः पुरुषस्य तु औपचारिक इति सूत्रतात्पर्यम्।" इदमेव दर्शयिष्यन् वृत्तिकारः प्रसङ्गात् मोक्षमपि निर्व्वक्ति प्रकृतिरित्यादिना। पुरुषच्छायापत्तिः—प्रतिबिम्बरूपेण प्रकृतौ स्थितस्य पुरुषस्य प्रकृतिधर्म्मबन्धसम्बन्धाभिमानः, अध्यासः—बन्धाध्यासः। फलितमाह—न तात्त्विक इति, पुरुषस्य बन्ध

ছেন—যেরূপ এক ব্যক্তির বহুভৃত্য থাকিলে আরাধন ও অপরাধ দ্বারা কেহ মুক্তিলাভ করে, কেহ প্রসাদভাগী হয় ও কেহ আবদ্ধ হয়, সেইরূপ এক প্রকৃতির যে বহুপুরুষ তাহাদের মধ্যেও যাহাদের স্পষ্টতঃ বিবেকজ্ঞান হয়, তাহাদের শীঘ্র মুক্তি হয়, যাহাদের উপাসনামাত্র হইয়াছে, তাহাদের চিত্তশুদ্ধ্যাদি দ্বারা ক্রমে মুক্তি হয়, যাহাদের উপাসনাও হয় নাই, তাহাদের মুক্তি হয় না ॥ ৪ ॥

আত্মা অপরিণামী, সুতরাং তাহার বন্ধ নাই এ বিষয়ে বলিতেছেন— "প্রকৃতির বাস্তব বন্ধ সিদ্ধ হইলে পুরুষের বন্ধের অধ্যাস সিদ্ধ হইবে।" প্রকৃতি বিবেকানুসারে যেই পুরুষের প্রতি নিজকে দেখাইতে পারিয়াছেন, সেই পুরুষের প্রতি তার প্রকৃতির প্রবৃত্তি হয় না, সেই অপ্রবৃত্তির নামই মোক্ষ। যেই পুরুষের প্রতি প্রকৃতির প্রবৃত্তি হয়, প্রতিবিম্বরূপে প্রকৃতিতে স্থিত সেই পুরুষেরই প্রকৃতি ধর্ম্মবন্ধের সম্বন্ধাভিমানরূপ বন্ধের অধ্যাস হয়,

অত্র প্রমাণং দর্শয়তি—

কার্য্যতস্তৎসিদ্ধিঃ ॥ ৬ ॥

প্রকৃতিকার্য্যাণাং মহদাদীনাম্ অবিচ্ছেদদর্শনাৎ প্রকৃতেঃ বন্ধসিদ্ধিঃ ॥ ৬ ॥

প্রকৃতিঃ প্রবৃত্তিস্বভাবত্বাৎ সর্ব্বপুরুষান্ প্রবর্ত্তয়েৎ, কিং বিবেকাবিবেকদর্শনেন ইত্যত্রাহ—

চেতনোদ্দেশান্নিয়মঃ কণ্টকমোক্ষবৎ ॥ ৭ ॥

যথা কণ্টকং দৃষ্ট্বা কশ্চিৎ কশ্চিৎ নিষেধতি 'অনেন বর্ত্মনা মা গাঃ' ন সর্ব্বান্ প্রতি, তথা অধিকারাৎ চেতনবিশেষোদ্দেশাৎ প্রবর্ত্তনং, ন সর্ব্বং প্রতি ইতি নিয়মঃ ॥ ৭ ॥

ইতি শেষঃ । উক্তার্থমনর্থকং প্রাচীনশ্লোকমুত্থাপয়িতুমাহ—তথাচেতি । শ্লোকার্থস্তু স্পষ্ট এব ॥ ৫ ॥

অত্রেতি, প্রকৃতেরেব বাস্তববন্ধত্বং ইত্যর্থঃ । অবিচ্ছেদদর্শনাদিত্যন্তং কার্য্যত ইত্যস্য বিবরণম্ । প্রকৃতের্ব্বন্ধসিদ্ধিরিতি তৎসিদ্ধিরিত্যস্য বিবরণম্ ॥ ৬ ॥

সূত্রান্তরমবতারয়তি—প্রকৃতিরিত্যাদিনা । দৃষ্টান্তপ্রকটনেন সূত্রতাৎপর্য্যং স্পষ্টয়তি—যথেত্যাদিনা । তথাচ বন্ধমোক্ষশাস্ত্রপ্রামাণ্যাদিভি"রবিবেকিনং প্রতি প্রকৃতেঃ প্রবর্ত্তকত্বং বিবেকিনং প্রতি চ নিবর্ত্তকত্ব"মিত্যেবংরূপঃ কশ্চনস্বভাববিশেষোঽবশ্যমঙ্গীকর্ত্তব্য ইতি ভাবঃ ॥ ৭ ॥

কিন্তু তাহা যথার্থ বন্ধ নহে । প্রাচীনগণও বলিয়াছেন—"আত্মা যদি স্বভাবতঃই মলীন অস্বচ্ছ ও বিকারী হয়, তবে শত জন্মে ও তাহার মুক্তি হইতে পারে না।" ( কারণ দ্রব্য সত্ত্বে কখনও স্বভাবের নাশ হয় না ) ॥ ৫ ॥

প্রকৃতিরই যে যথার্থ বন্ধ এ বিষয়ে প্রমাণ দেখাইতেছেন—প্রকৃতির কার্য্য মহদাদির কখনও বিচ্ছেদ দেখা যায় না বিধায় প্রকৃতিরই যথার্থ বন্ধ বলিতে হইবে ॥ ৬ ॥

প্রবৃত্তিই যদি প্রকৃতির স্বভাব, তবে সমস্ত পুরুষকেই প্রবর্ত্তিত করা উচিত, বিবেকাবিবেকদর্শনের প্রয়োজন কি এই আশঙ্কায় বলিতেছেন,—যেমন

न आत्मनो बन्ध इत्युक्तम्, तदाह—

**अन्ययोगेऽपि तत्सिद्धिर्नाञ्जस्येनायोदाहवत् ॥ ८ ॥**

प्रवर्त्तकत्वम् एव प्रकृतेः बन्धाय। प्रकृतियोगे अपि तच्छायापत्त्या पुरुषस्य बन्धाभिमानसिद्धिः। नाञ्जस्येन न तत्त्वतः। 'अयोदाहवत्' इति—यथा तप्तलोहयोगात् लोहः दहति इति मन्यते, न च लोहस्य दाहकत्वं, किन्तु संयोगात् अग्नेरेव इति ॥ ८ ॥

किमर्थं सृष्टिः ? इत्यत्राह—

**रागविरागयोर्योगः सृष्टिः ॥ ९ ॥**

रागात् भुक्तिः, वैराग्यात् मुक्तिः। परमार्थतस्तु रागादपि भोगे विषयदोषदर्शनात् वैराग्यमेवेति ॥ ९ ॥

आत्मनो बन्धस्यानात्त्विकत्वसमर्थकं सूत्रमवतारयति—नेत्यादिना। प्रसङ्गाद्बन्धकारणं निर्व्वक्ति—प्रवर्त्तकत्वमेवेति। यथाक्रमं सूत्रघटकपदानि व्याचष्टे—प्रकृतियोगेऽपीत्यादिना। तच्छायापत्त्या—प्रकृतिप्रतिबिम्बितत्वेन। दृष्टान्तं विशदीकरोति—यथेत्यादिना ॥ ८ ॥

भोगमोक्षयोर्निमित्तकारणनिरूपकं सूत्रमवतारयितुमाह – किमर्थमिति, किं कारणकमित्यर्थः।

কোন ব্যক্তি কণ্টক দেখিয়া ব্যক্তিবিশেষকেই "এই পথে যাইও না" বলিয়া নিবর্ত্তিত করিয়া থাকে, সকলকে নহে, সেইরূপ অধিকারবশে চেতনবিশেষের উদ্দেশেই প্রকৃতির প্রবর্ত্তন হয়, সকলের উদ্দেশে নহে, ইহাই স্বাভাবিক নিয়ম ॥ ৭ ॥

আত্মার যে যথার্থ বন্ধ নাই, ইহা বলা হইয়াছে, তাহাই দৃষ্টান্তদ্বারা বলিতেছেন—বন্ধের নিমিত্তই প্রকৃতির প্রবর্ত্তকত্ব। প্রকৃতিযোগেও প্রতিবিম্বিতত্ব নিবন্ধন পুরুষের বন্ধাভিমান হয়, কিন্তু সেই বন্ধ যথার্থ পুরুষের নহে। যেমন তপ্তলোহ-যোগে দাহস্থলে লোহায় দগ্ধ করিতেছে বলিয়া লোকে মনে করিয়া থাকে, বস্তুতঃ কিন্তু লোহের দাহকত্ব নাই, সংযোগবশতঃ অগ্নিরই যথার্থ দাহকত্ব ॥ ৮ ॥

ভোগ ও মুক্তির কারণ কি ? এই আকাঙ্ক্ষায় বলিতেছেন—রাগ হইতেই

प्रथमाध्याये 'सत्त्वरजस्तमः' इत्यादिसूत्रे पञ्चविंशतितत्त्वमुक्तम्। इदानीं सप्रपञ्चं क्रममाह—

**महदादिक्रमेण पञ्चभूतानाम्॥ १०॥**

सृष्टिः इति। क्रमं वक्ष्यति॥ १०॥

किं स्वार्थं परार्थं वा? इत्यत्राह—

**आत्मार्थत्वात् सृष्टेर्नैषामात्मार्थ आरम्भः॥ ११॥**

पुरुषार्थत्वात् सृष्टेः न एषां—महदादीनाम् आत्मार्थे—स्वार्थे आरम्भः। नित्यत्वात् प्रकृतेः स्वार्थारम्भो युक्तः, महदादीनान्तु कारणलयेन नाशात् सृष्टिमात्रम् इति॥ ११॥

---

सृष्टिः—भुक्तिः मुक्तिश्चेति शेषः। सूत्रमिदमर्थानुरोधात् पाठक्रमव्यत्ययेन व्याख्येयम्, यथा रागे सति सृष्टिः, विरागे च सति योगः—स्वरूपे अवस्थानं मुक्तिरिति यावत्। तथा-चैतदभिसन्धानेनैव वृत्तिकारः फलितमाह—रागादिति भुक्तिः वैराग्यान्मुक्तिरिति। रागोऽपि विषयदोषदर्शनद्वारा वैराग्यं प्रति हेतुरिति दर्शयन्नाह—परमार्थतस्त्विति॥ ९॥

सूत्रान्तरमवतारयति—प्रथमाध्याय इत्यादिना। शेषं पूरयति सृष्टिरिति॥ १०॥

प्रकृतिस्रष्टृत्वात् महदादिस्रष्टृत्वस्य विशेषप्रतिपादकं सूत्रमवतारयितुं पृच्छते—किं स्वार्थं परार्थं वेति महदादिकर्तृकसृष्टिरित्यर्थः। पुरुषार्थत्वादिति आत्मार्थत्वादित्यस्य विवरणम्॥११॥

ভুক্তি ও বৈরাগ্য হইতে মুক্তি হয়, বস্তুতঃ রাগ হইতেও ভোগে বিষয়ের দোষ-দর্শনে বৈরাগ্যই হইয়া থাকে॥ ৯॥

প্রথমাধ্যায়ে "সত্ত্বরজস্তমঃ" ইত্যাদি সূত্রে পঞ্চবিংশতিতত্ত্ব বলা হইয়াছে, সংপ্রতি তাহার বিস্তারিত ক্রম বলিতেছেন—মহদাদিক্রমে পঞ্চভূতের সৃষ্টি হয়। ক্রমে পরপর সূত্রে বলা হইবে। ১০॥

মহদাদি কর্তৃক যে সৃষ্টি হয়, তাহা স্বার্থ কি পরার্থ? এই আকাঙ্ক্ষায় বলিতেছেন, মহদাদি কর্তৃক যে সৃষ্টি, তাহার পুরুষার্থত্বনিবন্ধন ইহাদের আরম্ভ স্বার্থ নহে। প্রকৃতি নিত্য, সুতরাং তাহার স্বার্থ আরম্ভযুক্ত। মহদাদির কারণলয়াত্মক নাশ অবশ্যম্ভাবী, সুতরাং তাহাদের সৃষ্টি করাই ফল, অন্য আর কোন স্বার্থ নাই। ১১।

दिक्कालौ सिद्धौ, कथं गणनायां न श्रुतौ इत्यत्राह—

**दिक्कालावाकाशादिभ्यः ॥ १२ ॥**

तत्तदुपाधिभेदात् आकाशम् एव दिक्कालशब्दवाच्यम्। तस्मात् आकाशे अन्तर्भूतौ। आदिशब्दः सम्पातयातः। सप्तम्यर्थे पञ्चमी ॥ १२ ॥

महतो बुद्धेर्लक्षणमाह—

**अध्यवसायो बुद्धिः ॥ १३ ॥**

"एवम् एव" इति निश्चयः अध्यवसायः ॥ १३ ॥

धर्म्मादीनां क्व अन्तर्भावः? इत्यत्राह—

**तत्कार्य्यं धर्म्मादि ॥ १४ ॥**

सूत्रान्तरावतरणिकामाह—दिक्कालावित्यादिना, ननु सूत्रे आदिशब्दस्य सत्त्वात् कथमाकाश एवान्तर्भावो दर्शित इत्याशङ्कामपनेतुं तस्य प्रामादिकत्वमाह - आदिशब्द इत्यादिना। ननु सूत्रे पञ्चमीश्रुतेः आकाशे अन्तर्भावाविति व्याख्यानमसङ्गतमित्यत आह—सप्तम्यर्थे पञ्चमीति ॥१२॥

क्रमप्राप्तस्य महतो निरूपकं सूत्रमवतारयति—महत इत्यादिना। सूत्रीयाध्यवसायपदार्थमाह—एवमेव इति निश्चय इति। बुद्धिमहतोरेकपर्य्यायताज्ञापनाय सूत्रे बुद्धिशब्दोपादानम् ॥ १३ ॥

প্রসিদ্ধ দিক্ ও কালের গণনায় শ্রুতি নাই কেন? এই আশঙ্কায় বলিতেছেন,—তত্তদুপাধিভেদে আকাশই দিক্ ও কালশব্দবাচ্য, সুতরাং দিক্ ও কাল আকাশেই অন্তর্ভূত। সূত্রের আদি শব্দটি অভ্যাসবশতঃ প্রযুক্ত হইয়াছে, বস্তুতঃ এস্থলে ইহার কোনও প্রয়োজন নাই। 'আকাশাদিভ্যঃ' এই পঞ্চমী বিভক্তি এস্থলে সপ্তমী বিভক্তির অর্থে প্রযুক্ত হইয়াছে। (অন্যথা "আকাশে অন্তর্ভূত" এইরূপ অর্থ হইতে পারে না ॥ ১২ ॥

মহত্তত্ত্বের লক্ষণ বলিতেছেন—"এইপ্রকারই" এই নিশ্চয়রূপ অধ্যবসায়ই বুদ্ধি (মহত্তত্ত্ব) ॥ ১৩ ॥

धर्मज्ञानवैराग्यैश्वर्य्याणि। तत्कार्य्यत्वेन आत्मधर्मत्वं निरस्तम्। कार्य्यकारणयोः अभेदात् अन्तर्भावो दर्शितः॥ १४॥

तस्या विशेषम् आह—

**महदुपरागाद् विपरीतम्॥ १५॥**

अधर्माज्ञानावैराग्यानैश्वर्य्याणि। दृष्टो हि सहकारिभेदात् कार्य्यभेदः। यथा वेत्रवीजस्य वेत्राङ्कुरजनकत्वं, वह्निसंयोगसहकारिणः कदलीकाण्डजनकत्वं, तथा सत्त्वसहकारिणः महतः धर्मादिजनकत्वं, तमःसहकारिणः अधर्मादिजनकत्वम् इति॥ १५॥

सूत्रान्तरमवतारयति—धर्म्मादीनामित्यादिना। आदिशब्दसंग्राह्याणि दर्शयन् धर्म्मादिति पदं व्याचष्टे—धर्म्मेत्यादिना। तत्कार्य्यत्वेन—बुद्धिकार्य्यत्वेन, निरस्तमिति, धर्म्मधर्म्मिणो-रभेदादिति भावः। ननु बुद्धिकार्य्यत्वेऽपि कथं नाधिक्यमिति शङ्कां निराकर्त्तुमाह—कार्य्येत्यादि। अन्तर्भाव इति बुद्धावित्यादि॥ १४॥

तस्या इति, बुद्धेरित्यर्थः, विशेषं—सहकारि विशेषवशादपराण्यपि कार्य्याणि। सूत्रे महदुपरागादिति पदं महतस्तमसोऽभिभवादित्यर्थकं। पूर्व्वसूत्रोक्तधर्म्मादिचतुष्टयवैपरीत्ये-नाधर्म्मादिचतुष्टयबोधनायोपात्तं विपरीतमिति पदं व्याचष्टे—अधर्म्मेत्यादिना। एवं स्थिते सूत्रतात्पर्य्यं विशदयति—दृष्टो हीत्यादिना। भाष्यकारस्तु सूत्रमिदं "महत्—महत्तत्त्वं रज-स्तमोभ्यां उपरागात विपरीतं—अधर्म्मादिधर्म्मकमपि भवतीति. व्याख्यातवान्॥ १५॥

---

ধর্ম্মাদির অন্তর্ভাব কিসে হইবে? এই আকাঙ্ক্ষায় বলিতেছেন—ধর্ম্মাদি অর্থাৎ ধর্ম্মজ্ঞান, বৈরাগ্য ও ঐশ্বর্য্য মহত্তত্ত্বের কার্য্য। মহত্তত্ত্বের কার্য্যত্বনিবন্ধন ধর্ম্মাদির আত্মধর্ম্মত্ব নিরস্ত হইল, ফলে কার্য্যকারণের অভেদ বশতঃ মহত্তত্ত্বেই অন্তর্ভাব প্রদর্শিত হইল॥ ১৪॥

সহকারিবিশেষের সমবধানে বুদ্ধির অপর কার্য্য বলিতেছেন—মহত্তত্ত্ব তমোগুণে অভিভূত হইলে তাহা হইতে ধর্ম্মাদির বিপরীত অর্থাৎ অধর্ম্ম, অজ্ঞান, অবৈরাগ্য ও অনৈশ্বর্য্য হইয়া থাকে। যেমন বেত্রবীজের বেত্রাঙ্কুর জনকত্ব থাকিলেও বহ্নিসংযোগরূপ সহকারী সমবধানে বেত্রবীজ কদলীবৃক্ষ জন্মায়, সেইরূপ এক মহত্তত্ত্বই সত্ত্বগুণরূপসহকারি সমবধানে ধর্ম্মাদি ও তমোগুণরূপ সহকারীর সমবধানে অধর্ম্মাদি জন্মাইয়া থাকে॥ ১৫॥

क्रमप्राप्तम् अहङ्कारादिलक्षणमाह—

**अभिमानोऽहङ्कारः ॥ १६ ॥**

अहम् इति अभिमानः ॥ १६ ॥

तस्य कार्य्यमाह—

**एकादशपञ्चतन्मात्रं तत्कार्य्यम् ॥ १७ ॥**

एकादश इन्द्रियाणि पञ्च तन्मात्राणि षोड़शकं तत्कार्य्यम् ॥ १७ ॥

कथमेकस्मात् कारणात् जड़प्रकाशौ भवतः ? इत्यत्राह—

**सात्त्विकमेकादशकं प्रवर्त्तते वैकृतादहङ्कारात् ॥ १८ ॥**

महद्विकारात् अहङ्कारात् सात्त्विकं सत्त्वसहकृतं एकादशकं एकादशेन्द्रियं प्रवर्त्तते । तमःसहकृतं तन्मात्रम् ॥ १८ ॥

एवं बुद्धिधर्म्मानभिधाय अहङ्कारलक्षणनिरूपकं सूत्रमवतारयति—क्रमेत्यादिना । अहङ्कारलक्षणस्याभिमानस्याकारं दर्शयति—अहमिति ॥ १६ ॥

तस्येति अहङ्कारस्येत्यर्थः । सूत्रं व्याचष्टे—एकादशेत्यादिना । तत्कार्य्यं—अहङ्कारकार्य्यं । इन्द्रियादीनामहङ्कारकार्य्यत्वञ्च—मया अनेनेन्द्रियेनेदं रूपादिकं भोक्तव्यमित्याद्यभिमानादेवादिसर्गेष्विन्द्रियादीनामुत्पत्तेरिति मन्तव्यम् ॥ १७ ॥

सूत्रान्तरमवतारयितुं शङ्कते—कथमित्यादिना । महद्विकारादिति वैकृतादित्यस्य विवरणम् । तन्मात्रोत्पत्तौ सहकारिताकाङ्क्षायां पूरयति—तमःसहकृतं तन्मात्रमिति । अत्र च—"सात्त्विक एकादशकः प्रवर्त्तते वैकृतादहङ्कारात् भूतादेस्तन्मात्रः स तामसस्तैजसादुभयमिति कारिकया मनोमात्रस्यैव सात्त्विकत्वं सात्त्विकाहङ्कारोपादानत्वञ्चाभिधायान्येषामिन्द्रियाणां तैजसाहङ्कारोपादानकत्वमभिहितम् । भाष्यकारोऽपि तदनुसारेण "एकादशानां पूरणमेकादशकं मनः षोड़शात्मकगणमध्ये सात्त्विकं, अतस्तत्सात्त्विकादहङ्काराज्जायत" इति सूत्रमिदं

ক্রমপ্রাপ্ত অহঙ্কারাদির লক্ষণ বলিতেছেন—"অহং" ইত্যাকার অভিমানের নাম অহঙ্কার ॥ ১৬ ॥

সেই অহঙ্কারের কার্য্য বলিতেছেন—একাদশ ইন্দ্রিয় ও পঞ্চতন্মাত্র এই ষোড়শগণ অহঙ্কারের কার্য্য ॥ ১৭ ॥

এক অহঙ্কাররূপ কারণ হইতে কি প্রকার জড় পঞ্চ তন্মাত্র ও প্রকাশ

ইন্দ্রিয়ত্রৈবিধ্যম্ আহ—

**কর্ম্মেন্দ্রিয়বুদ্ধীন্দ্রিয়ৈরান্তরমেকাদশকম্ ॥ ১৯ ॥**

কর্ম্মেন্দ্রিয়ৈঃ বাগাদিভিঃ পঞ্চভিঃ, বুদ্ধীন্দ্রিয়ৈঃ ঘ্রাণাদিভিঃ পঞ্চভিঃ, সহ আন্তরং মন ইতি একাদশকম্ ইন্দ্রিয়ম্ ॥ ১৯ ॥

ভৌতিকানি ইন্দ্রিয়াণি ইতি, তৎপ্রতিষেধার্থমাহ—

**আহঙ্কারিকত্বশ্রুতের্ন ভৌতিকানি ॥ ২০ ॥**

তত্র চ শ্রুতিবাধাৎ ইত্যর্থঃ ॥ ২০ ॥

---

ব্যাখ্যায় "রাজসাহঙ্কারাদ্দ্বেন্দ্রিয়াণীত্যাদি পূরিতবানিতি বিরোধো দৃশ্যতে। এবঞ্চেন্দ্রিয়াণাং দেবতালয়শ্রুত্যা দেবতাভেদেন ব্যষ্টিকরণাপেক্ষয়া সমষ্টিকরণানাং দেবতাত্বেন চ। দেবতাত্বাবচ্ছিন্নতদিন্দ্রিয়াভিপ্রায়কতয়া বৃত্তিকৃদ্বচসঃ ইন্দ্রিয়ত্বাবচ্ছিন্নাভিপ্রায়কতয়া চ ভাষ্যকারাদিবচসঃ সাধুত্বং কথঞ্চিদুপপাদনীয়মিতি বিভাবনীয়ম্ ॥ ১৮ ॥

জ্ঞানকর্ম্মান্তরভেদেনেন্দ্রিয়ত্রৈবিধ্যপ্রতিপাদকং সূত্রমবতারয়িতুমাহ—ইন্দ্রিয়েতি। বাগাদিভিরিত্যাদিনা পাণিপাদপায়ূপস্থানাং পরিগ্রহঃ ঘ্রাণাদিভিরিত্যাদিনা চ চক্ষুস্ত্বক্শ্রোত্ররসনানাং পরিগ্রহঃ। "ইন্দ্রস্য—সঙ্ঘাতেশ্বরস্য করণং ইন্দ্রিয়ং, তথাচাহঙ্কারকার্য্যত্বে সতি করণত্বমিন্দ্রিয়ত্ব"মিতি ভাষ্যকারঃ ॥ ১৯ ॥

ইন্দ্রিয়াণাং ভৌতিকত্বমিত্যারম্ভবাদিনঃ, তেষাং মতস্য নিরাসকং সূত্রমবতারয়তি—ভৌতিকানীত্যাদিনা। শ্রুতিবাধাদিতি, যদ্যপীন্দ্রিয়াণামাহঙ্কারিকত্বপ্রতিপাদিকা সাক্ষাৎ শ্রুতির্ন দৃশ্যতে, তথাপি আচার্য্যবাক্যাৎ মন্বাদিবাক্যপ্রামাণ্যস্যানুমীয়মানায়াস্তদর্থকশ্রুত্যা বাধাদেব নেন্দ্রিয়াণি

---

ইন্দ্রিয়গণ হইয়া থাকে, এই আশঙ্কায় বলিতেছেন—মহদ্বিকার অহঙ্কার হইতে সত্ত্বসহকারে একাদশ ইন্দ্রিয় ও তমঃসহকারে পঞ্চতন্মাত্র প্রবৃত্ত হয় ॥ ১৮ ॥

ইন্দ্রিয়ের ত্রৈবিধ্য বলিতেছেন—বাক্, পাণি—পাদ, পায়ু ও উপস্থ ভেদে কর্ম্মেন্দ্রিয় পাঁচ, নাসিকা, চক্ষু, ত্বক্, শ্রোত্র ও রসনা ভেদে জ্ঞানেন্দ্রিয় পাঁচ এবং আন্তরিন্দ্রিয় মন, এই ত্রিবিধ ইন্দ্রিয়ের সমষ্টিতে একাদশ ॥ ১৯ ॥

আরম্ভবাদিগণ, বলেন ইন্দ্রিয় ভৌতিক তাহার প্রতিষেধের জন্য সূত্র

যুক্ত্যন্তরমাহ—

**দেবতালয়শ্রুতের্নারম্ভকস্য ॥ ২১ ॥**

কারণে কার্য্যলয়ঃ ইতি স্থিতম্। "আদিত্যং বৈ চক্ষুঃ গচ্ছতি" ইতি দেবে লয়ঃ শ্রূয়তে। তস্মাৎ ন আরম্ভকস্য ন আরম্ভকাভিমতস্য ভূতস্য কারণত্বম্ ইতি ॥ ২১ ॥

নিত্যানি ইন্দ্রিয়াণি ইতি কেচিৎ, তৎপরিহারার্থমাহ—

**তদুৎপত্তিঃ শ্রূয়তে, বিনাশদর্শনাচ্চ ॥ ২২ ॥**

অহঙ্কারাৎ তদুৎপত্তিঃ শ্রূয়তে। উৎপন্নস্য বিনাশঃ অপি অবশ্যম্ভাবী ইতি ॥ ২২ ॥

ভৌতিকানীতি তাৎপর্য্যম্। তথাচ ভাষ্যম্—"আহঙ্কারিকত্বে চ প্রমাণভূতা শ্রুতিঃ কাললুপ্তা। আচার্য্যবাক্যান্মন্বাদ্যখিলস্মৃতিভ্যশ্চানুমীয়তে" ইতি ॥ ২০ ॥

যুক্ত্যন্তরমিতি, ইন্দ্রিয়াণাং ভৌতিকত্বাভাবে হেত্বন্তরমিত্যর্থঃ। সূত্রং ব্যাচষ্টে—কারণ ইত্যাদিনা। শেষং পূরয়তি—কারণত্বমিতি, উপাদানকারণত্বমিত্যর্থঃ ॥ ২১ ॥

ইন্দ্রিয়নিত্যত্ববাদিনাং মতস্য নিরাসকং সূত্রমবতারয়তি—নিত্যেত্যাদিনা। সূত্রে বিনাশদর্শনাচ্চেতি, নেন্দ্রিয়াণি নিত্যানীতি শেষঃ ॥ ২২ ॥

বলিতেছেন, শ্রুতিতে আছে ইন্দ্রিয় অহঙ্কার হইতে উৎপন্ন, সুতরাং ইন্দ্রিয় ভৌতিক নহে, কারণ তাহা হইলে শ্রুত্যর্থের বাধ হয় ॥ ২০ ॥

ইন্দ্রিয় যে ভৌতিক নহে, তাহাতে আরও যুক্তি বলিতেছেন—কারণে যে কার্য্যের লয় হয়, ইহা প্রমাণসিদ্ধ, শ্রুতিতে আছে "চক্ষু আদিত্যে বিলীন হয়" সুতরাং আরম্ভরূপে অভিমতভূতে ইন্দ্রিয়ের উপাদানকারণত্ব থাকিতে পারে না ॥ ২১ ॥

কেহ কেহ বলেন, ইন্দ্রিয় নিত্য, তাহার প্রতিষেধার্থ বলিতেছেন—অহঙ্কার হইতে ইন্দ্রিয়ের উৎপত্তি শ্রুত হয়, উৎপন্নের বিনাশও অবশ্যম্ভাবী, সুতরাং ইন্দ্রিয় নিত্য নহে ॥ ২২ ॥

चक्षुरादीनां शक्तिभेददर्शनात् ऐन्द्रियकाणि इन्द्रियाणि इति, तन्निषेधति—

**अतीन्द्रियमिन्द्रियं, भ्रान्तानामधिष्ठाने ॥ २३ ॥**

भ्रान्तानाम् अधिष्ठाने चक्षुर्गोलकादौ इन्द्रियज्ञानम्। अन्यथा छिन्नकर्णस्य श्रवणानुपपत्तिः, पाटलचक्षुषो रूपग्रहणप्रसङ्गः ॥ २३ ॥

एकम् इन्द्रियं, उपाधिभेदात् नानात्वम् इत्यत्राह—

**शक्तिभेदेऽपि भेदसिद्धौ नैकत्वम् ॥ २४ ॥**

भवतु उपाधिभेदः, शक्तिभेदस्तु अवश्यं वक्तव्यः, स च सत्यः इति नानात्वमपि सत्यम् ॥ २४ ॥

चक्षुरादीनां गोलकाद्यात्मकत्ववादिनां मतस्य निरासकं सूत्रमवतारयति—चक्षुरित्यादिना। शक्तिभेददर्शनात्—गोलकगतकार्य्यकारित्वतारतम्यदर्शनात् ऐन्द्रियकाणि—इन्द्रियग्राह्याणि, गोलकाद्यात्मकानीति यावत्। भ्रान्तानां—अनभिज्ञचार्व्वाकादीनां। अन्यथा—गोलकाद्यात्मकत्वे, श्रवणानुपपत्तिरिति,। तदानीं दृष्टस्य कार्य्यस्य विनाशादिति भावः। पाटलचक्षुषः—आरक्तनेत्रस्य, रोगादिनापहतेन्द्रियस्येति यावत्, रूपग्रहणप्रसङ्ग इति, तदानीमपि गोलकस्य सत्त्वादिति भावः ॥ २३ ॥

एकेन्द्रियवादनिरासकं सूत्रमवतारयति—एकमित्यादिना। सूत्रतात्पर्य्यं विवृणोति—भवत्वित्यादिना। अवश्यं वक्तव्य इति अन्यथा कार्य्यभेदानुपपत्तेरिति भावः। नानात्वमिति

"চক্ষুরাদিতে গোলকগত কার্য্যকারিত্বের তারতম্য দেখা যায় বিধায় ইন্দ্রিয়গ্রাহ্য গোলকাদিই ইন্দ্রিয়" ইহাও কেহ কেহ বলিয়া থাকেন, তাহার নিষেধ করিতেছেন—অধিষ্ঠান গোলকাদিতে অনভিজ্ঞদিগেরই ইন্দ্রিয়জ্ঞান হইয়া থাকে, বস্তুতঃ ইন্দ্রিয়গণ ইন্দ্রিয়গ্রাহ্য নহে। অধিষ্ঠানের ইন্দ্রিয়ত্ব স্বীকার করিলে ছিন্নকায় ব্যক্তির শ্রবণের অনুপপত্তি ও আরক্ত চক্ষু ব্যক্তির রূপাদিদর্শনের আপত্তি হইতে পারে ॥ ২৩ ॥

কেহ কেহ বলেন, ইন্দ্রিয় এক, গোলকাদি উপাধিভেদে নানা বলিয়া ব্যবহৃত হইয়া থাকে, তদুত্তরে বলিতেছেন—উপাধিভেদ থাকিলেও শক্তির

एकत्वेनैव उपपत्तौ बहुत्वकल्पना गुर्व्वी इत्यत आह—

**न कल्पनाविरोधः प्रमाणदृष्टस्य ॥ २५ ॥**

स्पष्टम् ॥ २५ ॥

मनसो लक्षणमाह—

**उभयात्मकं च मनः ॥ २६ ॥**

बुद्धीन्द्रियात्मकं कर्म्मेन्द्रियात्मकं मनः, अधिष्ठानात् उभय प्रवृत्तेः ॥ २६ ॥

नैकत्वमित्यस्य विवरणम्, सत्यमिति, शक्तिभेदे शक्तिशक्तिमतोरभेदेन शक्तिमतामिन्द्रियाणां मिथो-भेदस्याप्यव्याहतत्वादित्यर्थः ॥ २४ ॥

सूत्रान्तरमवतारयति--एकत्वेनेत्यादिना। स्पष्टमिति, "प्रमाणेन—प्रत्यक्षादिप्रमाणेन दृष्टस्य—ज्ञातस्य साधितस्येति यावत्, कल्पनया—लाघवादिप्रदर्शनेन, विरोधः—वैपरीत्यं न भवतीति सूत्रार्थः सुव्यक्त इत्यर्थः ॥ २५ ॥

मनसः स्वरूपप्रतिपादकं सूत्रमवतारयति – मनस इत्यादिना। उभयात्मकत्वमेव विवृणोति बुद्धीत्यादिना। अत्र हेतुं पूरयति—अधिष्ठानादिति। उभयप्रवृत्तेः कर्म्मेन्द्रियबुद्धीन्द्रिय-प्रवृत्तेः अधिष्ठानात्—सम्पादकत्वादित्यर्थः, तत्सम्पादकत्वञ्च मनसोऽनवधाने अन्येषामिन्द्रियाणां स्वस्वव्यापारासमर्थत्वादिति ध्येयम् ॥ २६ ॥

ভেদ অবশ্যই স্বীকার করিতে হইবে, ( নচেৎ কার্য্যের ভেদ অসম্ভব ) সেই শক্তি ভেদ সত্য হইলে ইন্দ্রিয়ের নানাত্বও সত্য। (কারণ শক্তি ও শক্তিমৎ পদার্থ অভিন্ন বিধায় শক্তির ভেদ স্বীকার করিলে শক্তিমতের ভেদও অনিবার্য্য) ॥ ২৪ ॥

একত্ব স্বীকারেই উপপত্তিসম্ভবে ইন্দ্রিয়ের বহুত্ব কল্পনায় গৌরব হয়, এই আশঙ্কায় বলিতেছেন—প্রমাণসিদ্ধ পদার্থের কল্পনাবশে বৈপরীত্য হইতে পারে না ॥ ২৫ ॥

মনের লক্ষণ বলিতেছেন—মন জ্ঞানেন্দ্রিয় ও কর্ম্মেন্দ্রিয় এই উভয়াত্মক, কারণ মনই উভয় ইন্দ্রিয়ের প্রবৃত্তিসম্পাদক ॥ ২৬ ॥

कथमेकस्मात् अहङ्कारात् अनेकानि इन्द्रियाणि? इत्यत आह—

**गुणपरिणामभेदान्नानात्वमवस्थावत् ॥ २७ ॥**

धर्माधर्मसहकारिसत्त्वादिगुणपरिणामभेदात् अनेकानि। 'अवस्थावत्' इति, यथा एकस्य देहस्य बाल्ययौवनवार्द्धकानि इति ॥ २७ ॥

उभयेन्द्रियविषयमाह—

**रूपादिरसमलान्त उभयोः ॥ २८ ॥**

उभयोः बुद्धीन्द्रियकर्मेन्द्रिययोः। बुद्धीन्द्रियस्य विषयाः रूपरसगन्धस्पर्शशब्दाः। कर्मेन्द्रियस्य विषयाः वचनविहरणादानानन्दरसमलाः। रसमलः नाम मलः, तदन्तः ॥ २८ ॥

सूत्रान्तरमवतारयितुं प्रक्रमते—कथमित्यादिना। सूत्रतात्पर्यं विवृणोति—धर्मेत्यादिना। सूत्रे नानात्वमित्यत्रेन्द्रियाणामिति शेषः; तथाच इन्द्रियाणां नानात्वमित्यस्यैव भावार्थमाह—अनेकानीति, इन्द्रियाणीति शेषः ॥ २७ ॥

इन्द्रियाणां विषयनिरूपकं सूत्रमवतारयति—उभयेत्यादिना। यद्यपि ज्ञानेच्छाकृतिद्वेषाणामेव सविषयकत्वादिन्द्रियविषयत्वं दुर्घटं, तथापि स्वजन्यज्ञानविषयतामादाय ज्ञानेन्द्रियाणां स्वजन्यकृतिविषयतामादाय च कर्मेन्द्रियाणां विषयत्वमादाय तत्रापि च मसी कृतिविषयत्वं परम्परयैवोपगन्तव्यम्, अतएव सर्वेषामेकरूपेण कृतिविषयत्वानुमानाद्भाष्यकारेण वक्तव्यादातव्यगन्तव्यानन्दयितव्योत्स्रष्टव्यानामेव कर्मेन्द्रियविषयत्वमभिहितमिति मन्तव्यम्। सूत्रीयरसमलशब्दस्यार्थं प्रदर्शयितुमाह—रसमाला नाम मल इति। अन्नादिरसानां मलः पुरीषादिरिति भाष्यकारः ॥ २८ ॥

এক অহঙ্কার হইতে অনেকবিধ ইন্দ্রিয়ের উৎপত্তি হয় কিরূপে? এই আশঙ্কায় বলিতেছেন—ধর্ম্ম অধর্ম্মরূপ সহকারিসদ্ভাবে গুণপরিণামের ভেদবশতঃ ( এক হইতেই ) অনেক ইন্দ্রিয় হইয়া থাকে, যেমন এক দেহেরই বাল্য, যৌবন ও বার্দ্ধক্যরূপ নানা অবস্থা হয় ॥ ২৭ ॥

জ্ঞান ও কর্ম্মেন্দ্রিয়ের বিষয় বলিতেছেন—জ্ঞানেন্দ্রিয়ের বিষয় রূপ রস, গন্ধ, স্পর্শ ও শব্দ, কর্ম্মেন্দ্রিয়ের বিষয় বচন, আদান, বিহরণ, আনন্দ ও মূত্র পুরীষাদি ॥ ২৮ ॥

द्वाभ्याम् अपि न कुर्यात् इत्याह—

**द्वाभ्यामपि तथैव ॥ १० ॥**

संकथनादिदोषात् ॥ १० ॥

आख्यायिकान्तरमाह—

**निराशः सुखी पिङ्गलावत् ॥ ११ ॥**

पिङ्गला नाम वेश्या रत्यर्थं भुजङ्गागमनप्रतीक्षणात् उन्निद्रा दुःखम् अनुभूतवती । एकदा तु अत्यन्तदुःखनिर्विण्णा 'पुनः न एवं करिष्यामि' इति निर्विण्णा बभूव । निराशा सुखं स्वपिति, आशैव दुःखं तत्त्यागः सुखमित्यभिप्रायः ॥ ११ ॥

---

सूत्रान्तरमवतारयति—बहुभिरित्यादिना । दृष्टान्तं विशदयति—वंशेत्यादिना ॥ ९ ॥

सूत्रे तथैवेति—विरोध एवेत्यर्थः । तत्र हेतुं पूरयति—संकथनादिदोषादिति, द्वयोः सम्मेलनेऽपि परस्परालापस्यावश्यम्भावादित्यर्थः । तथाचोक्तम्—

"वासो बहूनां कलहो भवेद्वार्त्ता द्वयोरपि ।
एक एव चरेत्तस्मात् कुमार्या इव कङ्कणम् ॥" इति ॥ १० ॥

पिङ्गलावदिति दृष्टान्तं स्फुटीकरोति—पिङ्गला नामेत्यादिना । तथाचोक्तं—

"आशा हि परमं दुःखं नैराश्यं परमं सुखं ।
यथा संछिद्य कान्ताशां सुखं सुष्वाप पिङ्गला ॥" इति ॥

आख्यायिकायाः फलितार्थमाह—आशैवेत्यादिना । न च आशात्यागेन दुःखविगमे सत्यपि साधनाभावेन सुखं कुतः सम्भवतीति शङ्कनीयं, चित्तस्य सत्त्वप्रधानत्वेन स्वाभाविकमेव यत्-

পরস্পর সঙ্ঘর্ষে যেমন কুমারীর শঙ্খের ঝনৎকার হইয়া থাকে, বহুলোকের সহিত সম্মেলনেও সেইরূপ কলহ অবশ্যম্ভাবী। অতএব বহুলোকের সংসর্গ কর্ত্তব্য নহে। ৯।

উভয়ের সম্মেলনে ও পরস্পরালাপে বিরোধ ঘটে, অতএব তাহাও কর্ত্তব্য নহে, যোগীদের পক্ষে একাকী থাকাই বিধেয়। ১০।

পিঙ্গলানাম্নী এক বেশ্যা রত্যাশায় উপপতির আগমন প্রতীক্ষা করতঃ অনিদ্রায় কষ্ট পাইয়াছিল। এক দিন অত্যন্ত দুঃখিতা হইয়া "আর এইরূপ

गृहारम्भः दुःखाय, इत्याह—

**अनारम्भेऽपि परगृहे सुखी सर्पवत् ॥ १२ ॥**

व्यक्तम् ॥ १२ ॥

शास्त्रे व्याख्यानपरोपासनादिकमसारमस्ति, तत्परित्यजनीयम् इत्याह—

**बहुशास्त्रगुरूपासनेऽपि सारादानं षट्पदवत् ॥१३**

यथा भ्रमरः पुष्पं विहाय मधु समादत्ते, तद्वत् मोक्षार्थिना अविद्या त्याज्या इति ॥ १२ ॥

---

सुखं आशापिहितं तिष्ठति, तच्चाशाविगमेन लब्धवृत्तिकत्वात् । अत एव दुःखनिवृत्तावपि क्रियते सुखव्यवहारः, यथा भारापगमे "सुखी संवृत्त" इति व्यवह्रियते ॥ ११ ॥

व्यक्तमिति, मोक्षप्रतिबन्धकत्वात् भोगार्थमारम्भोऽपि न कर्तव्य इत्युपदेशः स्पष्ट इत्यर्थः । तथाचोक्तं—

"गृहारम्भो हि दुःखाय न सुखाय कथञ्चन ।
सर्पः परकृतं वेश्म प्रविश्य सुखमेधते ॥" इति ॥ १२ ॥

सूत्रान्तरमवतारयति—शास्त्र इत्यादिना । षट्पदवदिति दृष्टान्तं स्पष्टयति—यथेत्यादिना ; तथाचोक्तम्—

"अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः ।
सर्वतः सारमादद्यात् पुष्पेभ्य इव षट्पदः ॥" इति ॥ १३ ॥

---

প্রতীক্ষা করিব না" ইহা ভাবিয়া দুঃখিতা হইয়াও আশা ত্যাগ করিয়া সুখে নিদ্রা গিয়াছিল। অতএব আশা থাকিলেই দুঃখ এবং তাহা ত্যাগ করিতে পারিলেই সুখ ॥ ১১ ॥

ইন্দুরেরা বহুকষ্টে গৃহ নির্ম্মাণ করে, কিন্তু সর্প তাহাতে প্রবেশ করিয়া সুখে বাস করে। অতএব গৃহাদি নির্ম্মাণ না করিলেও সর্পের ন্যায় পরগৃহে সুখী হওয়া যায়, সুতরাং মুমুক্ষু ব্যক্তিরা বাসের জন্য গৃহাদির আড়ম্বর করিবেন না ॥ ১২ ॥

বহু শাস্ত্রে নানা ব্যাখ্যান পরোপাসনাদি বহু অসার এবং বহু উপাসনাদি

कस्य समाधिः भवति ? इत्यत्राह—

**इषुकारवन्नैव किञ्चित्तस्य समाधिहानिः ॥ १४ ॥**

यथा इषुकारः शरी गतमनाः समीपे गच्छन्तं राजानं न बुद्धवान्, तथैव एकाग्रमनसो न समाधिहानिः इति ॥ १४ ॥

सत्त्वशुद्ध्यर्थं न व्रतादिभङ्गः कर्त्तव्यः इत्याह—

**व्रतनियमलङ्घनादानर्थक्यं लोकवत् ॥ १५ ॥**

यथा लोके बहुशः कृतसमयलङ्घनं सर्वे परित्यजन्ति, तथा व्रतादिलङ्घनात् वेदार्थबाह्यो भवति इति ॥ १५ ॥

---

सूत्रान्तरमवतारयितुं प्रच्छते—कस्येति । दृष्टान्तं स्पष्टयति—यथेत्यादिना । तथाचोक्तम्—

"तदैवमात्मन्यवरुद्धचित्तो न वेद किञ्चिद्बहिरन्तरं वा ।
यथेषुकारो नृपतिं व्रजन्तमिषौ गतात्मा न ददर्श पार्श्वे ॥" इति ॥ १४ ॥

सूत्रान्तरमवतारयति—सत्त्वेत्यादिना । लोकवदिति दृष्टान्तं स्पष्टयति—यथेत्यादिना, कृतसमयलङ्घनमिति कृतं समयस्य—प्रतिज्ञायाः लङ्घनं—अप्रतिपालनं येन तादृशं जनमित्यर्थः । वेदार्थबाह्य इति, व्रतादिलङ्घनकारी जनः, वेदार्थस्य तत्त्वज्ञानस्य बाह्यः—बहिर्मुखः तल्लाभे असमर्थ इत्यर्थः । तथाच—"व्रतानां—चित्तशुद्ध्यादिसम्पादकस्नातकादिव्रतानां, नियमानां—शास्त्रविहितशौचाचारादीनां लङ्घनात्—अप्रतिपालनात्, आनर्थक्यं—तत्त्वज्ञानासाधकत्वेन योगाद्यनुष्ठानस्य वैफल्यमिति सूत्रार्थः । एवञ्च समुत्पन्ने तत्त्वज्ञाने व्रतादिलङ्घनेऽपि न दोषः । तथाचोक्तम्—

---

থাকিলেও ভ্রমরের ন্যায় সারগ্রাহী হইবে। ভ্রমর যেমন পুষ্প পরিত্যাগ করিয়া তাহার সারাংশ মধু গ্রহণ করে, সেইরূপ মোক্ষার্থীদিগেরও বিদ্যারূপ সারাংশ গ্রহণ করিয়া অবিদ্যাদি পরিত্যাগ কর্ত্তব্য। ১৩।

যেমন শরনির্ম্মাতা পুরুষ শরনির্ম্মাণমনস্ক হইলে ( একাগ্রতাবশতঃ ) সমীপগত রাজাকেও দেখিতে পায় না, সেইরূপ একাগ্রমনা ব্যক্তিরও সমাধি ভঙ্গ হয় না। অতএব সমাধির জন্য একাগ্রতা আবশ্যক। ১৪।

চিত্তবিশুদ্ধির জন্য অনুষ্ঠেয় ব্রতাদির পরিত্যাগ করা কর্ত্তব্য নহে, যেমন লোকে বহুবার প্রতিজ্ঞালঙ্ঘনকারী ব্যক্তি সকলেরই পরিত্যাজ্য

তত্ত্বজ্ঞানবিস্মরণেন দুঃখমবশ্যং ভবতি ইত্যাহ—

**তদ্বিস্মরণেঽপি ভেকীবৎ ॥ ১৬ ॥**

কশ্চিৎ নৃপঃ মৃগয়াং গতঃ, বনে সুন্দরীং কন্যামপশ্যৎ। তামপৃচ্ছৎ "কা ত্বমিতি"। সা প্রাহ "রাজদুহিতাঽহম্"। রাজা প্রাহ "মাং ভজস্ব"। সা প্রাহ "বাঢ়ং, কিন্তু সময়ং কুরু, ত্বয়া জলং মম ন দর্শনীয়"মিতি। "এবমস্তু" ইতি উক্তা তস্যাঃ পাণিং জগ্রাহ। এবং গতে কালে ক্রীড়য়া আয়াসিতা কুত্র জলমিতি রাজানং পপ্রচ্ছ। রাজাঽপি সংভ্রমাৎ সময়ং বিস্মৃত্য জলমদর্শয়ৎ। সা চ ভেকরাজদুহিতা জলস্পর্শাৎ ভেকী বভূব। রাজাঽপি জালাদিনা তামন্বিষ্য প্রাপ্য বহু দঃখমনুবভূব। তস্মাৎ তত্ত্বাভ্যাসবিচ্ছেদো ন কার্য্যঃ ইতি ॥ ১৬ ॥

"অপিতব্রতকর্ম্মা তু কেবলং ব্রহ্মণি স্থিতঃ।
ব্রহ্মভূতশ্চরন্ লোকে ব্রহ্মচারীতি কথ্যতে ॥ ইতি ॥" ১৫ ॥

নিয়মস্যাত্যাগেন জনিতস্য জ্ঞানস্যাবিস্মরণাদ্যায় তৎফলিতার্থং দর্শয়তি—তদ্বিস্মরণেত্যাদিনা ॥ ১৬ ॥

---

হয়, সেইরূপ ব্রতাদিলঙ্ঘনকারী ব্যক্তিও বেদার্থ হইতে পরিত্যাজ্য অর্থাৎ বেদার্থলাভে অসমর্থ হয়। অতএব ব্রতনিয়মাদি লঙ্ঘন করিয়া যোগাদির অনুষ্ঠান করিলেও তাহা ব্যর্থ হয় ॥ ১৫ ॥

তত্ত্বজ্ঞান বিস্মৃত হইলে দুঃখ অবশ্যম্ভাবী। কোন এক রাজা মৃগয়ায় গিয়া বনে এক সুন্দরী কন্যা দেখিলেন ও তাহাকে জিজ্ঞাসা করিলেন, "তুমি কে?" সে বলিল "আমি রাজার কন্যা" রাজা বলিলেন, "আমাকে ভজনা কর" সে বলিল, "স্বীকার করিলাম, কিন্তু প্রতিজ্ঞা কর যে, তুমি আমায় জল দেখাইতে পারিবে না" "তাহাই হইবে" বলিয়া রাজা তাহার পাণি গ্রহণ করিলেন। এরূপে কিছু দিন অতীত হইলে (একদিন) ক্রীড়াপরিশ্রান্তা সেই রাজদুহিতা রাজাকে জিজ্ঞাসা করিলেন "জল কোথায়?" রাজাও প্রতিজ্ঞা ভুলিয়া গিয়া সম্ভ্রমে তাহাকে জল দেখাইয়া দিলেন।

आख्यायिकान्तरमाह—

**नोपदेशश्रवणेऽपि कृतकृत्यः परामर्शादृते विरोचनवत्॥ १७**

न श्रवणमात्रात् मुक्तिः, किन्तु मननात् एव । यथा इन्द्रविरोचनौ तत्त्वज्ञानाय ब्रह्मलोकं गतौ, ब्रह्मणा च उपदिष्टौ । विरोचनः तत्त्वज्ञान-श्रवणात् स्वगृहम् आगतः न मननादि कृतवान् । अतो नामुच्यत । इन्द्रः तु ब्रह्माणमाराधयन् बहुकालं मननमकरोत् ॥ १७ ॥

इन्द्रस्य किं वृत्तम् ? इत्यत्राह—

**दृष्टस्तयोरिन्द्रस्य ॥ १८ ॥**

तयोः मध्ये इन्द्रस्य बोधः दृष्टः । बहुकालाभ्यासेन ब्रह्मप्रसादनात् मनननिदिध्यासनसाक्षात्कारात् सिद्धिः इति ॥ १८ ॥

---

सूत्रस्य भावार्थं विवृणोति—नेत्यादिना । तथाच—सूत्रं परामर्शादृते इत्यस्य मननं विनेत्यर्थः, मननञ्च श्रुतार्थस्य तात्पर्यनिर्णायकानुशीलनं । विरोचनवदिति दृष्टान्तं व्यञ्जयति—यथेत्यादिना ॥ १७ ॥

सूत्रान्तरमवतारयितुं प्रश्नते—इन्द्रस्येत्यादिना । सूत्रं व्याकुर्व्वन्नाह—तयोरिति । इन्द्र-विरोचनयोरित्यर्थः । अन्वयानिष्पत्तेः पूरयति—बोध इति ।—बहुकालेत्यादिना ॥ १८ ॥

সেই ভেকরাজার কন্যাও জলস্পর্শে ভেকী হইয়া গেল। রাজা আগাদিধারা বহু অনুসন্ধান করিয়াও তাঁহাকে না পাইয়া অতিশয় দুঃখ অনুভব করিলেন, অতএব তত্ত্বাভ্যাসের পরিত্যাগ করিবে না ॥ ১৬ ॥

শ্রবণমাত্র মুক্তি হয় না, পরন্তু মননাদি হইতেই মুক্তি হয়। যেমন ইন্দ্র ও বিরোচন উভয়েই তত্ত্বজ্ঞানের জন্য ব্রহ্মলোকে যাইয়া ব্রহ্মা কর্তৃক উপদিষ্ট হইলেন। বিরোচন তত্ত্বোপদেশ শ্রবণের পরেই নিজের ঘরে চলিয়া গেল, মননাদি করিল না, সুতরাং তাহার মুক্তিও হইল না। ইন্দ্র ব্রহ্মার আরাধনা করিয়া বহুকাল মনন করিলেন। সেই ইন্দ্র ও বিরোচনের মধ্যে ইন্দ্রেরই তত্ত্বজ্ঞান ও মুক্তি হইল। বহু কালাভ্যাসবশে ব্রহ্মপ্রসাদন ও শ্রবণ, মনন, নিদিধ্যাসন, সাক্ষাৎকার হইতেই সিদ্ধি হয় ॥ ১৭।১৮ ॥

ज्ञानप्राप्तिश्च कथम्? इत्यत आह—

**प्रणतिब्रह्मचर्य्योपसर्पणानि कृत्वा सिद्धिर्बहुकालात् तद्वत्॥ १९॥**

अप्रणतस्य अब्रह्मचारिणः अनधिकारः। तद्वत् इन्द्रवत्, यथा ब्रह्माराधनेन इन्द्रेण ज्ञानं प्राप्तं, तथा गुर्वाराधनेन अन्येनापि॥१९॥

किं कालदेशनियमात् मुक्तिः? तथा च चिरक्षिप्रभावः न स्यात् इत्यत आह—

**न कालनियमो वामदेववत्॥ २०॥**

आराधनार्थं कालनियमः, न मोक्षार्थं, वामदेवस्य तत्त्वज्ञानात् क्षिप्रं मुक्तिदर्शनात्॥२०॥

---

सूत्रान्तरमवतारयितुमाह—ज्ञानेत्यादिना। सूत्रस्य फलितार्थं कथयति—अप्रणतस्येत्यादिना। इन्द्रवदित्येव विशदयति—यथेत्यादिना॥ १९॥

सूत्रान्तरमवतारयितुं शङ्कते—किमित्यादिना। न स्यादिति, कालनियमस्य सर्व्वं प्रत्यविशेषादिति भावः। ननु कालनियमस्याभावे मोक्षशास्त्रेषु क्वचित् पुनः कालनियमः कथमुपपद्यत इत्यत आह—आराधनार्थमिति, तथाच—चिरक्षिप्रयो विहितस्याराधनस्यैव कालनियमो न तु साक्षान्मुक्तौ तस्योपयोग इति भावः। क्षिप्र मुक्तिदर्शनादिति जन्मान्तरीयसाधनेभ्यो वामदेवस्य गर्भे एव मुक्तिरिति श्रवणादित्यर्थः॥ २०॥

---

জ্ঞান প্রাপ্তি হয় কি প্রকারে? এই প্রশ্নে বলিতেছেন—অব্রহ্মচারী ব্যক্তির তত্ত্বজ্ঞানে অধিকার নাই। ইন্দ্র যেমন প্রণতি, ব্রহ্মচর্য্য ও গুরুগৃহে বাস করতঃ ব্রহ্মার আরাধনে বহু কালে তত্ত্বজ্ঞান লাভ করিয়াছিলেন, অন্যেও সেইরূপ ভাবে গুরুর আরাধনাদ্বারাই তত্ত্বজ্ঞান প্রাপ্ত হইবে॥১৯॥

মুক্তিতে কাল ও দেশের নিয়ম আছে কি না? যদি থাকে, তবে কাহারও শীঘ্র এবং কাহারও বিলম্বে মুক্তি হইতে পারে না, এই আশঙ্কায় বলিতেছেন—আরাধনাতেই কালাদির নিয়ম আছে, মুক্তিতে নাই, যেহেতু শুনা যায়, জন্মান্তরীয় তত্ত্বজ্ঞানবশে বামদেবের অতিশীঘ্র অর্থাৎ গর্ভেই মুক্তি হইয়াছিল॥২০॥

ज्ञाते हि ध्यायेत्, न च आत्मा केनापि दृष्टः। दृष्टः चेत्, किं ध्यानेन? इत्यत आह—

अध्यस्तरूपोपासनात् पारम्पर्य्येण यज्ञोपासकानामिव ॥ २१ ॥

धर्मश्च केन दृष्टः, तथापि धर्मलाभाय यज्ञोपासनं, पारम्पर्य्येण—देवतोद्देशेन हविस्त्यागात्। तथापि गुरुणा यत् अध्यस्तं रूपं, तत्स्वरूपोपासनात् पारम्पर्य्येण तद्रूपं प्रकाशते। दृष्टं च समानवस्तुचिन्तायां समानानुस्मरणम्। तथा च—

सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः।
अतो नातिप्रसङ्गोऽस्ति स्वप्नादौ भावनाबलात् ॥ २१ ॥

सूत्रान्तरमवतारयितुं शङ्कते—ज्ञात इत्यादिना। सूत्रतात्पर्यं विवारयन्नाह—धर्मश्च केन दृष्ट इति न केनापि दृष्ट इत्यर्थः। तथापि धर्मस्यादृष्टत्वेऽपि, यज्ञोपासनमिति, यथा लोकैः क्रियते इति शेषः। कथं क्रियत इत्याकाङ्क्षापूरकतया सूत्रपदमुपन्यस्यति—पारम्पर्य्येणेति, तदर्थमाह—देवतेत्यादिना। तेन चोपासनेन धर्मलाभोऽपि भवतीत्याशयः। ततः प्रकृते विभाव्य निगमयन्नाह—तथापीति। अध्यस्तं उपदिष्टमित्यादिना मनसि समारोपितं, तत्स्वरूपोपासनात्—गुरूपदिष्टस्वरूपस्यानुचिन्तनात् कथमनुचिन्तनमित्याकाङ्क्षायामाह—पारम्पर्य्येणेति, गुरूपदिष्टमार्गोक्तेतिकर्त्तव्यतादिनेत्यर्थः। इममेवार्थं समर्थयति—दृष्टञ्चेत्यादिना। स्मृतिबीजस्य—संस्कारस्य, बोधकाः—उद्बोधकाः ॥ २१ ॥

---

যাহার প্রত্যক্ষ হয়, তাহারই চিন্তা করা যায়, কিন্তু আত্মাকে ত কেহ প্রত্যক্ষ করেন নাই, যদি কেহ করিয়া থাকেন, তাহার ধ্যানেরও প্রয়োজন নাই, কারণ আত্মসাক্ষাৎকারই ধ্যানের চরম উদ্দেশ্য, অতএব আত্মার ধ্যান হয় কিরূপে? এই আশঙ্কায় বলিতেছেন—ধর্মকে কে দেখিয়াছে? তাহাকেও ত কেহ দেখে নাই, তথাপি ধর্মলাভের জন্য দেবতোদ্দেশে হবিস্ত্যাগাদিক্রমে লোকে যজ্ঞোপাসনা করিয়া থাকে (তদনুসারে ধর্মলাভও হয়) অতএব আত্মারও পূর্ব্বে প্রত্যক্ষ না হইলেও গুরু কর্ত্তৃক উপদিষ্টরূপ অনুসারে পারম্পর্য্যক্রমে আত্মার উপাসনা করিবে এবং তাহা

ब्रह्मादिलोकलाभात् कृतकृत्यस्य किमात्मज्ञानेन ? इत्यत आह—

**इतरलाभेऽप्यावृत्तिः पञ्चाग्नियोगतो जन्मश्रुतेः ॥२२॥**

अग्निहोत्रादिना ब्रह्मलोकप्राप्तिः, कर्मजत्वं क्षीयते इति पुनरावृत्तौ जन्मश्रुतिः 'यथा इह कर्मजितः लोकः क्षीयते, एवम् एव अमुत्र पुण्यजितः लोकः क्षीयते, इति, (छान्दो॰, उप॰, ८अध्या॰, १खण्ड॰, ६मन्त्रः)

किञ्च 'न कर्मणा न प्रजया धनेन, त्यागेनैके अमृतत्वमानशुः' इति (महा॰, नार॰ १०।५) ॥ २२ ॥

सूत्रान्तरमवतारयति—ब्रह्मे त्यादिना। "इतरलाभेऽपि—मोक्षेतरब्रह्मलोकावाप्त्यादिरूपफलप्राप्तावपि, आवृत्तिः—संसारे पुनरागमनं भवतीति शेषः, अत्र हेतुमाह—पञ्चाग्नियोगतो-जन्मश्रुतेरिति, ब्रह्मलोकं गतस्यापि देवयानपथेद्युपर्जन्यधरानरयोषिद्रूपपञ्चाग्नियोगेन क्रमेण जन्मश्रवणादित्यर्थः ॥" कर्मफलत्वेनैव ब्रह्मलोकावाप्तेः क्षयमुपपादयिष्यन् तस्याः कर्मजत्वं दर्शयति—अग्निहोत्रे त्यादिना ॥ २२ ॥

হইতেই আত্মার স্বরূপ প্রকাশিত হইবে। সমান বস্তুর চিন্তায় যে পরে সমান বস্তুর স্মরণ হয়, ইহা অনুভবসিদ্ধ। শাস্ত্রেও উক্ত আছে, "সদৃশ বস্তু অদৃষ্ট ও সদৃশ বস্তুর চিন্তা প্রভৃতি সংস্কারের উদ্বোধক। অতএব ভাবনাবশে যে অদৃষ্ট বস্তুও স্বপ্নে দেখা যায়, তাহাতে কোনও আপত্তি হইতে পারে না" ॥ ২১ ॥

ব্রহ্মাদি লোক লাভেই কৃতার্থতা সম্ভবে আত্মজ্ঞানের প্রয়োজন কি ? এই প্রশ্নে বলিতেছেন—ব্রহ্মলোকাদি লাভ করিলেও পুনরায় অবশ্যই সংসারে আসিতে হয়, যেহেতু ( ব্রহ্মাদি লোক প্রাপ্তদিগেরও দেবযানপথে ) পঞ্চাগ্নি-যোগক্রমে জন্মশ্রুতি আছে। অর্থাৎ—দিবপর্জন্য ( মেঘ ) পৃথিবী নর ও যোষিৎ পারিভাষিক পঞ্চাগ্নি, স্বর্গভোগক্ষয় হইলে স্বর্গচ্যুত হইয়া মেঘে, মেঘ হইতে জলের সঙ্গে পৃথিবী হইতে শস্যাদির সহিত নরশরীরে ও নর-শরীর হইতে রেতের সহিত স্ত্রীশরীরে প্রবিষ্ট হইয়া জন্ম হয়, ইহা উপনিষদে বিবৃতভাবে বর্ণিত আছে।

विरक्तस्य किं स्वरूपम्? इत्यत आह—

**विरक्तस्य हेयहानमुपादेयोपादानं हंसक्षीरवत् ॥२३॥**

यद्यपि सर्वेषां हेयहानम् उपादेयोपादानं, तथापि प्रकरण-विशेषात् हेयः संसारः, उपादेयो मोक्ष इति द्रष्टव्यम् ॥ २३ ॥

अत्र युक्तिमाह—

**लब्धातिशययोगात् तद्वत् ॥२४॥**

हंसवत् हंसस्य एव अतिशयशक्तिः येन मिश्रितमपि क्षीरं पिबति

---

विरक्तस्यैव तत्त्वज्ञाननिष्पत्तेः सिद्धान्तितत्वात्तत्स्वरूपनिरूपणपरतया परसूत्रमवतारयति—विरक्तस्येत्यादिना। ननु हेयहानोपादेयोपादानयोर्जीवमात्रसाधारणत्वात्ताभ्यां न किञ्चिदपि वैजात्यं, विरक्तस्य सिध्यतीति शङ्कते—यद्यपीत्यादिना, समाधत्ते—तथापीत्यादिना। तथाच संसारमोक्षयोरेव प्रस्तावात् सूत्रस्थं हेयपदं संसारपरं उपादेयपदञ्च मोक्षपरमिति भावः। एवञ्च—हंसो यथा मिश्रितयोरपि नीरक्षीरयोरसारं जलं त्यक्त्वा क्षीरमेव गृह्णाति, तथैव यः संसारमसारं त्यक्त्वा मोक्षमुपास्ते, स एव विरक्त इति स्थितम् ॥ २३ ॥

পরন্তু অগ্নিহোত্রাদি কর্ম্ম দ্বারাই ব্রহ্মলোকাদি প্রাপ্ত হয়। অথচ কর্ম্মজ হইলেই তাহার ক্ষয় আছে। পুনরাবৃত্তি বিষয়ে আরও অন্যশ্রুতি আছে—"যেমন ইহলোকে কর্ম্মজিত ব্যক্তির ক্ষয় হয়, তেমন পরলোকে পুণ্যজিত ব্যক্তিরও ক্ষয় হয়।" "কর্ম্মসন্তান বা ধনদ্বারা মুক্তি হয় না, ত্যাগদ্বারাই কেহ কেহ মুক্তি লাভ করিয়াছেন।" (অতএব ব্রহ্মলোকাদি লাভে কৃতার্থতা হইতে পারে না) ॥ ২২ ॥

বিরক্তের লক্ষণ কি? এই প্রশ্নে বলিতেছেন—জলমিশ্রিত দুগ্ধ হইতে অসার জল পরিত্যাগ করিয়া দুগ্ধ গ্রহণ করা যেমন হংসের লক্ষণ, সেইরূপ হেয় পদার্থের পরিত্যাগ ও উপাদেয় পদার্থের গ্রহণ বিরক্তের লক্ষণ। যদিও হেয় পদার্থের পরিত্যাগ ও উপাদেয় পদার্থের গ্রহণ প্রাণিমাত্রেরই সমান, তথাপি প্রকরণবশে এই সূত্রে হেয় শব্দের অর্থ সংসার ও উপাদেয় শব্দের অর্থ মোক্ষ বুঝিতে হইবে ॥ ২৩ ॥

जलं त्यजति । तथा लब्धातिशयस्य पुंसः संसारः हेयः उपादेयः मोक्षः इति ॥ २४ ॥

सरागस्यापि मुक्तिर्भविष्यति इत्यत्राह—

**न कामचारित्वं रागोपहतेः शुकवत् ॥२५॥**

रागोपहतस्य कामचारित्वमेव नास्ति, किं पुनर्मुक्तिरिति। यथा व्यासस्य सरागस्य न मुक्तिः, अथ तत्सुतस्य शुकस्य वीत-रागत्वात् मुक्तिर्भूता एवम् ॥ २५ ॥

बन्धः कथम् ? इत्यत्राह—

**गुणयोगाद् बन्धः शुकवत् ॥ २६ ॥**

यथा शुकः पक्षी गुणयोगात् बन्धमाप्नोति, तथा गुणयोगात् पुमानपि बन्धमाप्नोति ॥ २६ ॥

---

जले ति, विरक्तस्य संसारत्यागमोक्षोपादानयोरित्यर्थः । हंसवदिति तद्वदित्यस्य विवरणम् । लब्धातिशयस्य—ध्यानादिना विरागशक्तिसम्पन्नस्य ॥ २४ ॥

सूत्रान्तरमवतारयति—सरागस्ये त्यादिना । रागेणोपहतिर्यस्ये ति व्युत्पत्त्या रागोपहति-पदस्यार्थमाह—रागोपहतस्ये ति । शुकवदिति दृष्टान्तं व्याचष्टे—यथेत्यादिना ॥ २५ ॥

सूत्रान्तरमवतारयितुं प्रश्नयति—बन्धः कथमिति । शुकवदिति दृष्टान्तं विधाय सूत्रार्थमाह—यथेत्यादिना । सूत्रीयः श्लिष्टो गुणशब्दः शुकपक्षे मधुरभाषणादिगुणं रज्जुं वा, पुरुषपक्षे तु सत्त्वादिगुणत्रयमभिधत्त इत्यवधेयम् ॥ २६ ॥

---

এ বিষয়ে যুক্তি এই যে, সেইরূপ হংসেরই তাদৃশ অতিশয় শক্তি আছে, যাহার বলে মিশ্রিত হইলেও দুগ্ধপান করে ও জল পরিত্যাগ করে। সেই-রূপ ধ্যানাদিদ্বারা যাঁহারা অতিশয় অর্থাৎ বিরাগাদি লাভ করিয়াছেন, তাদৃশ পুরুষের পক্ষেই সংসার হেয় ও মোক্ষ উপাদেয় হইতে পারে। ২৪ ।

রাগযুক্ত ব্যক্তিরই মুক্তি হইবে, এই আশঙ্কায় বলিতেছেন—রাগোপহত ব্যক্তির কামচারিত্বই নাই, মুক্তি ত দূরের কথা, তাহার দৃষ্টান্ত ব্যাসের রাগ (ভোগাসক্তি) ছিল বলিয়া মুক্তি হয় নাই, কিন্তু তাঁহার পুত্র শুকদেবের রাগশূন্যতা বশতঃ মুক্তি হইয়াছিল। ২৫ ।

भोगादेव वैराग्यं कालक्रमात् भविष्यति, किं ज्ञानेन? इत्यत्राह—

**न भोगाद्रागशान्तिर्मुनिवत् ॥ २७ ॥**

न मुनेरपि भोगात् रागशान्तिः, किं पुनरन्यस्य? यथा काश्यपसौभरिप्रभृतयः ॥ २७ ॥

विषयिणां कथं वैराग्यं भविष्यति? इत्यत्राह—

**दोषदर्शनादुभयोः ॥ २८ ॥**

उभयोः—आत्मनः विषयस्य च। आत्मनो दोषः सङ्गात् नरकपातः गर्भवासादिश्च। विषयदोषः परिणतिविरसत्वादिः ॥ २८ ॥

---

सूत्रान्तरमवतारयति—भोगेत्यादिना। मुनिवदिति—दृष्टान्तं विवृणोति—यथेत्यादिना। यथा काश्यपसौभरिप्रभृतय इति, न भोगाद्विरक्ता इति शेषः। तथाचोक्तं सौभरिणा—

"आमृत्युतो नैव मनोरथानामन्तोऽस्ति विज्ञातमिदं मयाद्य।
मनोरथासक्तिपरस्य चित्तं न जायते वै परमार्थसङ्गि ॥" इति ॥ २७ ॥

आत्मनो विषयस्य च दोषदर्शनादेव वैराग्यं भवतीत्यर्थपरतया परसूत्रमवतारयितुं पृच्छति—विषयिणां कथं वैराग्यमिति। अन्यत् स्पष्टम् ॥ २८ ॥

---

বদ্ধ হয় কি প্রকারে? এই আশঙ্কায় বলিতেছেন—শুকদেব পক্ষী যেমন মধুরভাষিতাদিগুণ-যোগে বা রজ্জু-যোগে বন্ধ লাভ করে, সেইরূপ পুরুষও সত্ত্বাদিগুণযোগে বন্ধ লাভ করে। ২৬।

ভোগ হইতেই কালে (ভোগের বাসনা নিবৃত্তি হইলে) বৈরাগ্য হইবে জ্ঞানের আবশ্যকতা কি? এই আশঙ্কায় বলিতেছেন—মুনিদিগেরও ভোগ হইতে রাগের শান্তি হয় নাই, অন্যের হইবে কিরূপে? তাহার দৃষ্টান্ত কশ্যপ, সৌভরি প্রভৃতি মুনিগণও ভোগ করিয়া ভোগস্পৃহা কমাইতে পারেন নাই। (অর্থাৎ ভোগে ভোগস্পৃহার বৃদ্ধি ভিন্ন হ্রাস হয় না) । ২৭ ।

বিষয়ীদিগের বৈরাগ্য হইবে কি প্রকারে? এই প্রশ্নে বলিতেছেন—আত্মার ও বিষয়ের দোষদর্শনেই বৈরাগ্য জন্মে। আত্মার দোষ প্রকৃতি

उपदेशानधिकारिणं पुरुषम् आह—

**न मलिनचेतस्युपदेशवीजप्ररोहोऽजवत् ॥ २९ ॥**

यथाऽसंस्कृते क्षेत्रे न वीजप्ररोहः, तथा रागादिमलिनचेतसि न उपदेशवीजप्ररोहः। 'अजवत्' इति अजनाम्नि नृपे भार्य्याशोकार्त्ते यथा वसिष्ठेन उपदेशो दत्तः न स्थिरीबभूव ॥ २९ ॥

रागादिमलिने चेतसि नाभासज्ञानमपि इत्याह—

**नाभासमात्रमपि मलिनदर्पणवत् ॥ ३० ॥**

यथा मलिने दर्पणे मुखाभासमपि न प्रतिभाति, तथाप्रधान-प्रतिबिम्बितत्वात् आत्मनः प्रधानकार्य्यमात्मज्ञानम् ॥ ३० ॥

---

परसूत्रावतारणप्रयोजनमाह—उपदेशेत्यादिना। दृष्टान्तेन द्रढयन् सूत्रार्थमाह—यथेत्यादिना ॥ २९ ॥

सूत्रान्तरप्रयोजनमाह—रागादीत्यादिना। दृष्टान्तं विशद्य सूत्रार्थं विवृणोति— यथे-त्यादिना। मुखाभासमपि—यथावन्मुखस्य छायापातोऽपि। तथेति मलिनचेतसि न यथावदात्मनः प्रतिबिम्बितत्वमिति शेषः। ननु मास्तु यथावदात्मनः प्रतिबिम्बितत्वं, तथाप्यात्मनः स्वरूपज्ञाने का बाधेत्याशङ्कामपाकरोति—प्रधानेत्यादिना। प्रधाने—बुद्धितत्त्वात्मना परिणते मालिन्यादि-दूषिते अन्तःकरणापरपर्य्याये आत्मनः प्रतिबिम्बितत्वात्—यथावदात्मनः प्रतिफलितत्वात् आत्म-

---

সঙ্গে নরকপাত গর্ভবাসাদি, বিষয়ের দোষ পরিণামে ক্লেশদায়িত্ব ও ক্ষণভঙ্গুরত্বাদি ॥ ২৮ ॥

উপদেশের অনধিকারী পুরুষ কে ? তাহা বলিতেছেন—যেমন অসংস্কৃত ক্ষেত্রে বীজের অঙ্কুর হয় না, সেইরূপ রাগাদি মলিনচিত্তেও উপদেশ বীজ অঙ্কুরিত হয় না। তাহার দৃষ্টান্ত ভার্য্যাশোকার্ত্ত অজনামক রাজার চিত্তে বশিষ্ঠ মুনি প্রদত্ত উপদেশও স্থিরীভূত হয় নাই। (শোক তাপ, কাম, ক্রোধ, লোভ, মোহ, মাৎসর্য্য এই সকলই চিত্তের মালিন্য, এই সকল সত্ত্বে কখনও উপদেশ গ্রহণের সামর্থ্য জন্মে না) ॥ ২৯ ॥

মলিন দর্পণে যেমন যথাযথঃ মুখের ছায়াও পড়ে না, মলিন চিত্তেও তেমন যথাযথঃ আত্মার প্রতিবিম্ব পড়ে না। বিশুদ্ধ চিত্তে যথাযথঃ আত্মার প্রতিবিম্ব

ननु महानेव कारणरूपत्वादात्मज्ञानमस्तु ? इत्यत्राह—

न तज्जस्यापि तद्रूपता पङ्कजादिवत् ॥ २१ ॥

न कार्य्यमेव कारणं भेदात् । न हि पङ्कज एव पङ्कः ॥ २१ ॥

अणिमादिविभूतिसिद्धस्यापि न कृतकृत्यता इत्याह—

न भूतियोगे कृतकृत्यतोपास्यसिद्धिवदुपास्यसिद्धिवत् ॥२२

यथा गुरूपासनया तत्त्वज्ञानेन सिद्धस्य अनावृत्तेः कृतकृत्यता, तथा न भूतियोगेन, पुनरावृत्तेः ॥ उपास्यमितिवत् इति वीप्सा अध्यायपरिसमाप्तौ ॥ २२ ॥

इति कापिलसांख्यप्रवचनसूत्रवृत्तौ आख्यायिकाध्यायश्चतुर्थः ॥ *

ज्ञानं—यथावदात्मविषयिणी बुद्धिवृत्तिः, प्रधानकार्य्यं—बुद्धितत्त्वात्मनापरिणतस्यान्तः-करणापरपर्य्यायस्य प्रधानस्य निर्म्माल्यं, भवति नान्यथेति शेषः । तथाच मलिनचेतसि यथाव-दात्मनः प्रतिबिम्बितत्वाभावादेव तदाभासतोऽपि न तज्ज्ञानं सम्भवतीति भावः ॥ ३० ॥

सूत्रान्तरमवतारयितुं पृच्छति—नन्विति । महानेव—अन्तःकरणापरपर्य्यायबुद्धितत्त्वमेव, आत्मज्ञानमस्त्विति, कार्य्यकारणयोरभेदादिति भावः । तथाच पूर्व्वसूत्रोक्तदृष्टान्तसिद्धान्तौ व्याहताविति शङ्कार्थः, अथच आत्मा अस्त्विति पाठः पूर्व्वपरार्थसङ्गत्यभावेन प्रामादिक एव । उक्ता-शङ्कां परिहरन् सूत्रतात्पर्य्यं विवृणोति—नेत्यादिना । तथाच—यथा पङ्काज्जातस्यापि पङ्कजस्य न पङ्करूपता, तथा महत्तत्त्वजन्यस्यापि आत्मज्ञानस्य न महत्तत्त्वरूपतेति सूत्रार्थः ॥ ३१ ॥

পড়ে বলিয়াই স্বরূপতঃ আত্মার জ্ঞান জন্মে, অর্থাৎ স্বরূপতঃ আত্মার প্রতিবিম্বপাত হয় না বলিয়া আভাসতও আত্মার স্বরূপজ্ঞান অসম্ভব। ৩০।

মহত্তত্ত্ব (বুদ্ধিতত্ত্ব)ই আত্মজ্ঞানের স্বরূপ হউক, যেহেতু মহত্তত্ত্ব আত্ম-জ্ঞানের কারণ, এই আশঙ্কায় বলিতেছেন—মহত্তত্ত্ব জন্য হইলেও আত্মজ্ঞান মহত্তত্ত্বস্বরূপ নহে, যেমন পঙ্ক জন্য হইয়াও পঙ্কজ পঙ্কস্বরূপ নহে। অর্থাৎ কার্য্য আর কারণ যে সর্ব্বদাই অভিন্ন, ইহা ঠিক নহে, যেহেতু উভয়ের ভেদোপলব্ধি আছে। ৩১।

* एतदध्यायप्रतिपाद्यसंग्राहकश्लोकौ भाष्यकारोक्तौ यथा—

"अध्यायेऽस्मिंस्तुरीये तु विवेकज्ञानसाधकम् ।

आख्यायिकाभिः सन्नीतमध्याये समापितः ॥"

आख्यायिकानन्तरं परपक्षनिरासार्थं-

## पञ्चमोऽध्यायारम्भः ।

**मङ्गलाचरणं शिष्टाचारात् फलदर्शनात् श्रुतितश्चेति ॥ १ ॥**

कृतेऽपि मङ्गले ग्रन्थापरिसमाप्तेः अकृतेऽपि समाप्तेः, किं मङ्गलेन ? इति यैः उक्तं, तत् अनेन निरस्तम् ॥ १ ॥

सूत्रान्तरावतारप्रयोजनमाह—अपिमित्यादिना । उपाख्यसिद्धिवदिति दृष्टान्तं व्यतिरेकेण समर्थयन् सूत्रतात्पर्यं विवृणोति—यथेत्यादिना । छिन्नस्य—मृतस्य । न भूतियोगेनेति कृतकृत्यतेत्यर्थः, अत्र हेतुमाह—पुनरावृत्तेरिति ॥ ३२ ॥

इति श्रीकृष्णविहारि-तर्कसिद्धान्तभट्टाचार्यविरचितायां सांख्यसूत्रानिरुद्धवृत्तिटीकायाम् तत्त्वदीपिनीसमाख्यायां आख्यायिकाध्यायश्चतुर्थः ॥

---

पञ्चमाध्यायावतरणिकामाह—आख्यायिकेत्यादिना । परपक्षनिरासार्थमिति, स्वशास्त्रं प्रति परैः प्रयुक्तानां पूर्वपक्षाणां अपाकरणार्थमित्यर्थः ।

तत्रादौ "आरम्भसूत्रीयाथशब्देन सूचितस्य मङ्गलाचरणस्य वैफल्य"मिति पूर्वपक्षस्य समाधानपरतया सूत्रमिदमवतारयिष्यन् पूर्वपक्षं निरूपयति—कृतेऽपीत्यादिना । ग्रन्थापरि-

---

গুরুশাসনাদিক্রমে তত্ত্বজ্ঞানদ্বারা মুক্ত পুরুষের যেরূপ কৃতার্থতা অণিমাদি অষ্টসিদ্ধি লাভ করিলেও সেইরূপ কৃতার্থতা হইতে পারে না, যেহেতু তাহাদের পুনরাবৃত্তি আছে ॥ ৩২ ॥

কপিলকৃত সাংখ্যসূত্রের আখ্যায়িকাপ্রতিপাদক চতুর্থ অধ্যায় সমাপ্ত হইল ॥ ৪ ॥

আখ্যায়িকার পরে পরপক্ষনিরাসের নিমিত্ত পঞ্চম অধ্যায়ের আরম্ভ ।

মঙ্গলাচরণ করিলেও গ্রন্থের সমাপ্তি হয় না, না করিলেও সমাপ্তি হয়, সুতরাং গ্রন্থের আদিতে মঙ্গলাচরণের প্রয়োজন কি ? এই কথা যাহারা

सिद्धमीश्वरासत्त्वम् इदानीं न्यायमाह-

**नेश्वराधिष्ठिते फलसम्पत्तिः, कर्मणा तत्सिद्धेः ॥ २**

**यदि ईश्वरः स्वतन्त्रः कर्त्ता, कर्मणा विनापि कुर्य्यात्? अथ**

समाप्तेरिति, कादम्बर्य्यादिग्रन्थानां समाप्त्यभावादित्यर्थः, तथाचानेन कारणसत्त्वेऽपि कार्य्यानुत्पादरूपोऽन्वयव्यभिचारः प्रदर्शितः । अकृतेऽपीति मङ्गले इत्यनेनान्वयः, समाप्तेः—नास्तिकादिग्रन्थानां सम्पूर्णत्वात्, तथाचानेन कारणासत्त्वेऽपि कार्य्योत्पादरूपो व्यतिरेकव्यभिचारो दर्शितः । तत्—तेषां मतं "दर्शितान्वयव्यतिरेकव्यभिचाराभ्यां समाप्तिं प्रति मङ्गलाचरणस्य हेतुत्वासम्भवात्, अयशब्देन ग्रन्थारम्भे कृतं मङ्गलाचरणं व्यर्थमिति पूर्व्वपक्ष इति यावत् । अनेन—एतत्सूत्रेण, निरस्तं—अप्रामाण्यदोषग्रस्तम् । तथाहि "फलदर्शनात्—मङ्गलाचरणस्य सफलत्वानुमानात् मङ्गलाचरणं ( न व्यर्थं )" मिति सूत्रार्थः । मङ्गलाचरणस्य सफलत्वानुमाने हेतुं दर्शयति—शिष्टाचारादिति, आचारस्यात्र भावप्रधाननिर्द्देशत्वेन शिष्टानां—फलसाधनत्वांशे भ्रान्तिरहितानां आचारत्वादित्यर्थः । तथाच मङ्गलाचरणं सफलं शिष्टाचारत्वादिति प्रयोगः । मङ्गलाचरणस्य सफलत्वे प्रमाणान्तरं दर्शयति—श्रुतितश्चेति, शिष्टाचारानुमितात् मङ्गलाचरणस्येष्टसाधनताबोधकवेदादित्यर्थः । नन्वेवमपि न समाप्तिफलकत्वसिद्धिरिति चेन्न, शिष्टाचारत्वेन सफलत्वे सिद्धे तत्र फलजिज्ञासायां सम्भवति दृष्टफलकत्वे अदृष्टफलकल्पनाया अन्याय्यत्वात् फलान्तराश्रवणाच्च समाप्तिफलकत्वस्यैवानुमीयमानत्वात् । तथाचायं प्रयोगः—मङ्गलाचरणं समाप्तिफलकं समाप्त्यन्यफलकत्वे सति सफलत्वादिति । न च दर्शितान्वयव्यतिरेकव्यभिचारपरिपन्थित्वादेव समाप्तिफलकत्वानुमानमयुक्तमिति च वचनीयम्, यत्किञ्चिदपि विफलत्वादिकल्पनेनान्वयव्यभिचारस्य जन्मान्तरीयमङ्गलाचरणस्य मानसिकादिमङ्गलाचरणसद्भावस्य वा कल्पनेन व्यतिरेकव्यभिचारस्य वारणीयत्वात् । यद्वा स्वप्रतियोगिवर्णानुकूलकृतिमत्तासम्बन्धेन "चरमवर्णध्वंस"रूपसमाप्तिं प्रति स्वजन्यविघ्नध्वंसद्वत्तासम्बन्धेन मङ्गलाचरणस्य हेतुत्वं, तथाच यत्र सत्यपि मङ्गले समाप्तिर्न दृश्यते, तत्र बलवत्तरविघ्नस्य विघ्नप्राचुर्य्यस्य वा सद्भावात् तादृशविघ्नस्य च प्रचुरमङ्गलाचरणनाश्यत्वेन नमस्काररूपमङ्गलाचरणमात्रनाश्यत्वाभावात् स्वजन्यविघ्नध्वंसवत्तासम्बन्धेन मङ्गलाचरणस्य कार्य्याधिकरणे सत्त्वाभावादेव नान्वयव्यभिचारावसर इति सूक्ष्ममीक्षणीयम् ॥ १ ॥

पीनरुक्त्याशङ्कामपाकुर्व्वन् ईश्वरासिद्धत्ववादनिराकरणपरं सूत्रमवतारयति—पूर्व्वसिद्ध-

---

বলেন, তাঁহাদের মত সূত্রদ্বারা নিরস্ত হইল, কারণ মঙ্গলাচরণের সফলত্ব শিষ্টাচারানুমিত ও শ্রুতিপ্রতিপাদিত বিষয়ে মঙ্গলাচরণ ব্যর্থ নহে ॥ ১ ॥

कर्म्मसहकारी कुरुते, कर्म्मैवास्तु, किमीश्वरेण? न च सहकारी प्रधानशक्तिं बाधते, स्वातन्त्र्यविघातात्। किञ्च स्वार्थपरार्थाभ्यां प्रवृत्तिः दृष्टा। न चेश्वरस्य स्वार्थमस्ति। परार्थत्वे कारुणिकस्य दुःखमयसृष्ट्यनुपपत्तिः। न च परार्थप्रवृत्तिः, परोपकारादिना अपि स्वार्थलाभात् प्रवृत्तेः। तस्मात् कर्म्मैव जगत्कारणमस्तु ॥ २ ॥

---

मित्यादिना। पूर्व्वसिद्धं—"ईश्वरासिद्धेः" इत्यादिसूत्रैः प्रतिपन्नं। सूत्रतात्पर्य्यं विवृणोति—यदीत्यादिना। स्वतन्त्रः—अन्यानपेक्षशक्तिमान्। कर्म्मैवास्त्विति—साधकमिति शेषः, एवकार-व्यवच्छेद्यमाह—किमीश्वरेणेति, साधकत्वमीश्वरकल्पनेनेत्यर्थः। ननु प्रधानशक्तिसहकारित्वमेव सहकारी कल्प्यत इति कर्म्मणः सहकारित्वमेवास्तु? इत्याशङ्कामपाकरोति—न चेत्यादिना। यथान्ये स्वाधीनशक्तिमत्त्वमेव स्वातन्त्र्यमस्तु ततश्च, कर्म्मणः सहकारित्वेऽपि न स्वातन्त्र्यहानिरित्यत ईश्वरकर्तृत्वे दोषान्तरमवतारयति—किञ्चेत्यादिना। ईश्वरस्यापि स्वार्थसद्भावे रागाद्यापत्त्या जीववत्संसारित्वमेव न स्यादिति तस्य स्वार्थं निषेधति न चेत्यादिना। नन्वस्तु परार्थैव सृष्टि-रित्यत आह—परार्थत्व इति। स्वार्थमन्तरेण परार्थप्रवृत्तेरेवासम्भवं दर्शयति—न चेत्यादिना। स्वार्थलाभादिति कीर्त्तिकलापादिरूपस्वार्थलाभादित्यर्थः। उपसंहरति तस्मादित्यादिना। तथाच—"कर्म्मणा—आवश्यककर्म्मबोध, तत्सिद्धेः—फलनिष्पत्तिसम्भवात्, ईश्वराधिष्ठिते कारणे फलनिष्पत्तिः—कर्म्मफलरूपपरिणामस्य निष्पत्तिः न युक्त इति" सूत्रार्थः। ततश्चेश्वर-सिद्धिः सुदूरपराहतैवेति स्थितम् ॥ २ ॥

---

"ঈশ্বরাসিদ্ধেঃ" ইত্যাদি সূত্রদ্বারা সিদ্ধান্তিত ঈশ্বরাসিদ্ধি এখন যুক্তিদ্বারা বলিতেছেন—যদি ঈশ্বর স্বাধীন কর্ত্তা হন, তবে কর্ম্ম ভিন্নও সৃষ্টি করিতে পারেন, আর যদি কর্ম্মসহকারী হন, তবে একমাত্র কর্ম্মই কারণ হইতে পারে, ঈশ্বরের প্রয়োজন কি? সহকারী যে প্রধানের শক্তিকে বাধা করে, তাহাও বলা যায় না, কারণ তাহা হইলে প্রধানের স্বতন্ত্রতার ব্যাঘাত ঘটে। আরও বক্তব্য এই যে, নিজের জন্য পরের জন্য প্রবৃত্তি হইতে দেখা যায়, কিন্তু ঈশ্বরের কোনও স্বার্থ নাই, পরার্থই যদি তাহার প্রবৃত্তি স্বীকার কর, তবে করুণাময় ঈশ্বরের দুঃখময় সৃষ্টি করার অনুপপত্তি হয়। স্বার্থ ভিন্ন কেবল পরার্থও প্রবৃত্তি হয় না, পরোপ-কারাদি দ্বারাও কীর্ত্তিকলাপাদিরূপ স্বার্থলাভ হয় বলিয়াই তাহাতে প্রবৃত্ত হয়। অতএব কেবল কর্ম্মই জগতের কারণ হইতে পারে। সুতরাং "কর্ম্ম-

एतद्दर्शयति—

**स्वोपकारादधिष्ठानं लोकवत् ॥ ३ ॥**

न च नित्यस्य स्वोपकारः सम्भवति ॥ ३ ॥

स्वोपकार एव भविष्यति इत्यत्राह—

**लौकिकेश्वरवदितरथा ॥ ४ ॥**

असर्वज्ञ इत्यर्थः ॥ ४ ॥

दूषणान्तरमाह—

**पारिभाषिको वा ॥ ५ ॥**

प्रकृतिच्छायापत्त्या तत्र कर्तृत्वात् आत्मैव कर्त्तेति तस्य ईश्वर इति संज्ञा परिभाषा इत्यर्थः ॥ ५ ॥

---

एतदिति, ईश्वरानधिष्ठातृत्वमित्यर्थः। ईश्वराधिष्ठाने स्वोपकारात्—स्वोपकारहेतुकं लोकवदधिष्ठानं स्यादिति सूत्रार्थः। भवतु तथेति शङ्कामपाकर्तुमाह—नचेति ॥ ३ ॥

कथं न सम्भवतीति शङ्कानिराकरणपरं सूत्रमवतारयति स्वोपकार—इत्यादिना। इतरथा स्वोपकारस्वीकारे लौकिकेश्वरवत्—राजादिवत् सोऽपि असर्वज्ञः स्यादिति सूत्रार्थं बोधयितुमाह—असर्वज्ञ इत्यर्थ इति। तथाच असर्वज्ञत्वापूर्णकामत्वाद्यापत्त्या ईश्वरस्य स्वोपकारः स्वीकर्तुं न शक्य इति भावः ॥ ४ ॥

दूषणान्तरमिति, स्वोपकारस्वीकार इत्यादिः। सूत्रतात्पर्यं विवृणोति—प्रकृतीत्यादिना। तथाचासर्वज्ञत्वादिमत्त्वेऽपि चेद्भवतीश्वरस्तदा अस्माकं स्वर्गादुपपदवाच्यादिवत् पारिभाषिक एव स ईश्वरो न तु अपूर्णकामत्वादिविरोधिन निरैश्वर्यमानिति भावः ॥ ५ ॥

---

তাহাই স্বোপকারের সম্ভব থাকায় ঈশ্বরাধিষ্ঠিত কারণে ফলনিষ্পত্তিযুক্ত নহে ॥ ২ ॥

ঈশ্বরাধিষ্ঠাতৃত্ব স্বীকার করিলে সাধারণ লোকের ন্যায় ঈশ্বরাধিষ্ঠাতৃত্বও নিজের উপকারের জন্য স্বীকার করিতে হয়। অথচ নিত্য ঈশ্বরের নিজের উপকার অসম্ভব ॥ ৩ ॥

ঈশ্বরের স্বোপকার স্বীকার করিলে লৌকিক ঈশ্বরের (রাজাদির) ন্যায় তিনিও অসর্বজ্ঞ ও অপূর্ণকাম হইয়া পড়েন ॥ ৪ ॥

অথবা ঈশ্বরের স্বোপকার স্বীকার করিলে প্রকৃতি প্রতিবিম্বিতত্বনিবন্ধন

इत्यन्तरमाह-

**न रागादृते तत्सिद्धिः प्रतिनियतकारणत्वात् ॥६॥**

अविनाभावस्य कारणत्वव्यभिचारे सर्व्वत्रानाश्वासः। रागस्य प्रवृत्तिनिमित्तमिति तं विना कथं जगन्निर्मातृत्वम्? न च मुक्तस्य रागोऽस्ति ॥ ६ ॥

राग एव भविष्यति इत्यत्राह—

**तद्योगेऽपि न नित्यमुक्तः ॥ ७ ॥**

रागयोगेऽपि ॥ ७ ॥

---

इत्यन्तरमिति, ईश्वरस्यानधिष्ठातृत्वे युक्त्यन्तरमित्यर्थः। "रागादृते—रागं विना न तत्सिद्धिः—न जगन्निर्मातृत्वसिद्धिः, अत्र हेतुमाह—प्रतिनियतकारणत्वादिति। प्रवृत्तिं प्रति रागस्य असाधारणहेतुत्वादित्यर्थं इति सूत्रव्याख्यानम्। ननु प्रवृत्तिं प्रति रागस्य हेतुत्वं नाङ्गीक्रियेत इति शङ्कां निरस्यति—अविनेत्यादिना। अविनाभावस्य—नियतावश्यकपूर्व्वभाविनः, कारणत्वव्यभिचारे—कारणत्वासत्त्वे, अनाश्वासः—सर्व्वत्रैव कार्य्यकारणभावकल्पनासम्भवः। अविनाभावत्वस्यैव कारणत्वनियामकत्वादिति भावः। फलितमाह—रागस्येत्यादिना। प्रवृत्तिनिमित्तं प्रवृत्तेर्निमित्तकारणं। तं विना रागं विना। तटस्थाशङ्कां निराकरोति—नचेत्यादिना। अत्र च—"उपकारः—इष्टार्थसिद्धिः, रागस्तु तत्कृतैच्छेति न पौनरुक्त्य"मिति भाष्यकारोक्तिरनुसर्त्तव्या ॥ ६ ॥

सूत्रान्तरमवतारयति—राग एवेत्यादिना। रागयोगेऽपीति तद्योगेऽपीत्यस्य विवरणम्।

---

প্রকৃতির কর্ত্তৃত্বে কর্ত্তৃত্বাভিমানী হয় বলিয়া আত্মারই "ঈশ্বর" এইরূপ একটি পারিভাষিক নামমাত্র হইতে পারে, ফলে নিত্যৈশ্বর্য্যশালী পরাভিমত ঈশ্বরের সিদ্ধি হয় না ॥ ৫ ॥

পরন্তু রাগ প্রবৃত্তির প্রতি মুখ্য কারণ, সুতরাং রাগ ব্যতিরেকে ঈশ্বরের জগন্নির্ম্মাতৃত্ব সিদ্ধি হইতে পারে না। রাগ যে প্রবৃত্তির প্রতি কারণ নহে, তাহাও বলা যায় না, কারণ রাগ ভিন্ন প্রবৃত্তি হইতে দেখা যায় না। যে ভিন্ন যাহা না হয়, সে যদি তাহার কারণ না হয়, তবে কোথাও কার্য্যকারণভাব কল্পনার সম্ভব হয় না, কারণ এইরূপ অবিনাভাবই কার্য্যকারণভাবের নিয়ামক ॥৬॥

प्रधानशक्तियोगात् कर्त्तृत्वं भविष्यति इत्यत आह—

**प्रधानशक्तियोगाच्चेत् सङ्गापत्तिः ॥ ८ ॥**

'असङ्गो ह्ययं पुरुषः' इति तद्विरोधापत्तिः ॥ ८ ॥

न प्रधानसङ्गः, किन्तु प्रधानसत्तामात्रेण कर्त्तृत्वं भविष्यति इत्यत आह

**सत्तामात्राच्चेत्, सर्वैश्वर्य्यम् ॥ ९ ॥**

सर्वात्मनः प्रति प्रधानसत्तायाः अविशेषात् सर्वात्मनाम् ईश्वरत्वम्॥९

ईश्वरसाधनानि प्रमाणानि सन्ति, तत् कथम्? इत्यत आह—

**प्रमाणाभावान्न तत्सिद्धिः ॥ १० ॥**

प्रत्यक्षप्रमाणाभावात् ॥ १० ॥

तथाच रागयोगेऽपि स्वीक्रियमाणेनेश्वरो नित्यमुक्तः स्यादिति सूत्रार्थः। तत्र नेश्वरस्य नित्यमुक्तत्वं वदतस्तव सिद्धान्तहानिरिति भावः ॥ ७ ॥

सूत्रान्तरमवतारयति—प्रधानेत्यादिना। सङ्गापत्तिरित्यस्य भावार्थमाह—असङ्ग इत्यादिना। तथाच असङ्ग इत्यादि श्रुतिविरोधादेवेश्वरे प्रधानशक्तियोगः कल्पयितुमशक्य इति भावः ॥ ८ ॥

सूत्रान्तरावतरणिकामाह—नेत्यादिना। सूत्रतात्पर्यं विवृणोति—सत्तेत्यादिना। ईश्वरत्वमिति प्रसज्येत इति शेषः, तथाच क एवेश्वर इति भवतु सिद्धान्तहानिरित्याशयः ॥ ९ ॥

तत्कथमिति, ईश्वरासत्त्वमिति शेषः, तथाच ईश्वरसाधकप्रमाणविरोधेन दर्शितदोषा न विचारसहा इति भावः, अनुमानादेरुत्तरसूत्रनिरास्यत्वेन व्याचष्टे—प्रत्यक्षप्रमाणाभावादिति ॥१०॥

রাগাদি যোগও যদি ঈশ্বরের স্বীকার কর, তবে তিনি নিত্যমুক্ত হইতে পারেন না, অস্মদাদির ন্যায় ভোগবাসনাদিযুক্ত ও অমুক্ত হইয়া পড়েন, ফলে ঈশ্বরবাদীদিগের সিদ্ধান্তহানি হয় ॥ ৭ ॥

রাগ না থাকিলেও প্রধান শক্তিযোগেই কর্তৃত্ব হইবে, এইরূপ স্বীকার করিলে ঈশ্বরের সঙ্গাপত্তি হয়, ফলে "অসঙ্গোহ্যয়ং পুরুষঃ" অর্থাৎ পুরুষ নিঃসঙ্গ এই শ্রুতির বিরোধ হইবে ॥ ৮ ॥

প্রধানের সহিত পুরুষের সঙ্গ হয় না, কিন্তু প্রধানের সত্তামাত্রেই ঈশ্বরের কর্তৃত্ব হইবে, এইরূপ বলিলে সকলেরই ঈশ্বরত্বাপত্তি হয়, কারণ সমস্ত আত্মার প্রতিই প্রধান সত্তার অবিশেষ ॥ ৯ ॥

अनुमानं भविष्यति इत्यत्राह—

**सम्बन्धाभावान्नानुमानम् ॥ ११ ॥**

प्रत्यक्षपूर्वकत्वात् व्याप्तेः तदभावात् कुतः सम्बन्धग्रहः । न च साधारणस्य सम्बन्धग्रहः ॥ ११ ॥

शाब्दं प्रमाणं भविष्यति इत्यत्राह—

**श्रुतिरपि प्रधानकार्य्यस्य ॥ १२ ॥**

'प्रधानात् जगत् उत्पद्यते' इति श्रुतिः अस्ति । तस्मात् ईश्वर-साधकप्रमाणानि प्रमाणाभासानि ॥ १२ ॥

---

अनुमानं भविष्यतीति, ईश्वरसिद्धौ प्रमाणमित्यादिः, सूत्रतात्पर्य्यं विवृणोति—प्रत्यक्षे-त्यादिना । व्याप्तेः—व्याप्तिज्ञानस्य, प्रत्यक्षपूर्व्वकत्वात्—साध्यसाधनयोः सहचारग्रहादिरूप-प्रत्यक्षोपजीवकत्वात्, तदभावात्—तादृशसहचारग्रहाद्यभावात्, सम्बन्धग्रहः—व्याप्तिग्रहः, असाधारणस्य—सहचारग्रहाद्यविषयस्य । तथाच—सम्बन्धाभावात्—व्याप्तिज्ञानस्यासम्भवात् अनु-मानमपि नेश्वरसिद्धौ प्रमाणमिति सूत्रार्थः । नच साक्षादीश्वरविषयकानुमानासम्भवेऽपि महदादिकं सकर्त्तृकं कार्य्यत्वादित्याद्यनुमानमेव कर्त्तृत्वे नेश्वरसाधकं भविष्यतीति वचनीयं, अप्रयोजकत्वशङ्काकवलितत्वेन तादृशानुमानस्याप्रमाणत्वात्, कथञ्चित् सप्रयोजकत्वो-पपादनेऽपि प्रधानकर्त्तृकत्वेनापि तदर्थपर्य्यवसानसम्भवे ईश्वरसाधनत्वाभावादित्यास्तां विस्तरः ॥ ११ ॥

सूत्रान्तरमवतारयति—शाब्दमित्यादिना । श्रुतिरस्तीति, "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपा" इत्यादयोऽप्यनुसर्त्तव्याः । "तदैक्षत बहुस्या"मित्यादि चेतन-

ঈশ্বরের সাধক প্রমাণ আছে, তবে ঈশ্বরের অসত্ত্ব হয় কেন ? এই আশ-ঙ্কায় বলিতেছেন, প্রত্যক্ষ প্রমাণের অভাববশতঃ ঈশ্বরের সিদ্ধি হইতে পারে না ॥ ১০ ॥

ব্যাপ্তিজ্ঞানের প্রতি সাধ্য ও সাধনের সহচার প্রত্যক্ষ কারণ, তদভাবে ব্যাপ্তিজ্ঞান হইবে কিরূপে, সহচার প্রত্যক্ষের অবিষয়ে ব্যাপ্তিজ্ঞান হয় না, সুতরাং ব্যাপ্তিজ্ঞানের অসম্ভব বশতঃই অনুমানও ঈশ্বরসিদ্ধিতে প্রমাণ হইতে পারে না ॥ ১১ ॥

"প্রধান হইতেই জগতের উৎপত্তি হয়" এ বিষয়েই শ্রুতিও আছে। ফলে

अविद्यायोगादात्मनः कर्तृत्वमिति केचित् । तत्राह—

**नाविद्याशक्तियोगो निःसङ्गस्य ॥ १३ ॥**

व्यक्तम् ॥ १३ ॥

दूषणान्तरमाह—

**तद्योगे तत्सिद्धावन्योऽन्याश्रयत्वम् ॥ १४ ॥**

अविद्यया विना न सृष्टिः, सृष्ट्या विना न अविद्या इति अन्योऽन्याश्रयत्वम् ॥ १४ ॥

अनादित्वाद्बीजाङ्कुरवत् नान्योऽन्याश्रयत्वमिति आह—

**न बीजाङ्कुरवत् सादिसंसारश्रुतेः ॥ १५ ॥**

भवेदेवं यद्यनादिः संसारः । किन्तु सादिः संसारः श्रुतिश्च—

कारणत्वपरश्रुतिविरोधः इति शङ्कनीयं तस्याः सर्गादावुत्पन्नमहत्तत्त्वोपाधिकमहापुरुषस्य अन्यज्ञानपरतयैवोपपत्तेः । उपसंहरति—तस्मादित्यादिना । प्रमाणवदाभासन्ते इति प्रमाणाभासानि, न तु वस्तुगत्या प्रमाणानीत्यर्थः ॥ १२ ॥

सूत्रान्तरमवतारयति—अविद्येत्यादिना । व्यक्तमिति, अविद्याशक्तियोगाङ्गीकारे "असङ्गो ह्ययं पुरुषः" इति पूर्वोक्तश्रुतिविरोधो दुष्परिहर एव स्यादिति भावः ॥ १३ ॥

दूषणान्तरमिति, अविद्यायोगादात्मनः कर्तृत्वाङ्गीकारे दोषान्तरमित्यर्थः । सूत्रे तद्योगे—अविद्याशक्तियोगे, तत्सिद्धौ—आत्मनः कर्तृत्वसिद्धौ स्वापेक्षापेक्षित्वरूपं अन्योऽन्याश्रयत्वं दर्शयति—अविद्ययेत्यादिना ॥ १४ ॥

ইহাই প্রতিপন্ন হইল যে, ঈশ্বরাসিদ্ধিতে শাব্দ প্রমাণও নাই। অতএব ঈশ্বর সাধক প্রমাণ বলিয়া যে সকলকে মনে করা যায়, সে সকল প্রমাণাভাস বস্তুগত্যা প্রমাণ নহে ॥ ১২ ॥

কেহ কেহ বলেন, অবিদ্যাযোগে কর্তৃত্ব হয়, তাহাও ঠিক নহে, কারণ নিঃসঙ্গ পুরুষের অবিদ্যাযোগ অসম্ভব ॥ ১৩ ॥

অবিদ্যাযোগে আত্মার কর্তৃত্ব স্বীকার করিলে অবিদ্যাযোগ ভিন্ন সৃষ্টি হইতে পারে না এবং সৃষ্টি ভিন্ন অবিদ্যাযোগ হইতে পারে না, এইরূপ অন্যোন্যাশ্রয় দোষ হয় ॥ ১৪ ॥

विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतःस्पात् ।
संबाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन् देव एकः ॥
(शुक्ल यजु, १७ अध्याय १८ क) तस्मात् प्रलये प्रवाहविच्छेद इति ॥१५

अविद्यास्वरूपे वाधकमाह—

**विद्यातोऽनत्वे ब्रह्मबाधप्रसङ्गः ॥ १६ ॥**

विद्यातः अन्यत्वे ब्रह्मणोऽपि विद्यातोऽन्यत्वेनाद्यत्वं स्यात् ।
ततश्च ब्रह्मत्वबाधः इति ॥ १६ ॥

---

मूलान्तरावतरणिकामाह—अनादित्वादित्यादिना । यथा बीजमन्तरेणाङ्कुरस्याङ्कुरमन्तरेण बीजस्य चासम्भवेऽपि तदन्योन्याश्रयो नानादित्वाद्दोषावह:, तथा अविद्यायोगमन्तरेण कर्तृत्वस्य कर्तृत्वमन्तरेणाविद्यायोगस्य चासम्भवेऽपि नानादित्वात्तदन्योन्याश्रयोऽपि दोषावहः स्यादित्यवतरणिकार्थः । सूत्रतात्पर्य्यं विवृणोति—भवेदित्यादिना, एवं—एतदन्योन्याश्रयस्यादोषावहत्वं । संसारस्य सादित्वे विप्रतिपन्नं निवारयितुं प्रति प्रमाणयन्नाह—श्रुतयेति । श्रुतौ प्रथमसंशब्दस्य धमतीत्यनेन द्वितीयसंशब्दस्य च जनयन् इत्यनेन सम्बन्धः, तथाच—विश्वतः सर्व्वतश्चक्षुंषि यस्य स विश्वतश्चक्षुः, उत—अपिच विश्वतो मुखानि यस्य स विश्वतो मुखः, विश्वतो बाहवो यस्य स विश्वतोबाहुः उत विश्वतः पादा यस्य स विश्वतःस्पात् ( पादस्य लोपोऽहस्त्यादिभ्य इति पादस्यान्तलोपः ) एवम्भूतः एकः असहायः देवः द्यावाभूमी संजनयन् बाहुभ्यां बाहुस्थानीयाभ्यां धर्म्माधर्म्माभ्यां पतत्रैः पतनशीलैः अनित्यैः भूतैश्च संधमति सङ्गमयति जीवानिति इत्यर्थः । अत्र विशुद्धसत्त्वप्रधानतया प्रकृतावेव देवशब्दप्रयोगः, नातः इयमेव श्रुतिः ईश्वरं साधयतीति स्वसिद्धान्तहानिरिति मन्तव्यम् ॥ १५ ॥

---

যেমন "বীজ ভিন্ন অঙ্কুর হয় না ও অঙ্কুর ভিন্ন বীজ হয় না" এই বীজাঙ্কু-রের অন্যোন্যাশ্রয় অনাদিত্বনিবন্ধন দোষাবহ নহে, সেইরূপ পূর্ব্বোক্ত অন্যোন্যাশ্রয়ও দোষাবহ হইবে না। এই আশঙ্কায় বলিতেছেন—যদি সংসার অনাদি হইত, তবে এই অন্যোন্যাশ্রয়ের অদোষত্ব হইতে পারিত, কিন্তু সংসার সাদি ( অনাদি নহে ); সংসারের সাদিত্বে শ্রুতিও আছে, "এই বিশ্বের সমস্ত যাঁহার চক্ষু, এবং সমস্ত যাঁহার মুখ, সমস্ত যাঁহার বাহু ও সমস্ত যাঁহার চরণ, এতাদৃশ স্বর্গ ও পৃথিবীর উৎপাদনশীল এক দেবতা ( প্রকৃতি ) বাহুস্থানীয় ধর্ম্ম ও অধর্ম্ম দ্বারা অনিত্য ভূতের সহিত জীবদিগকে সংযোজিত করেন ॥ ১৫ ॥

युक्त्यन्तरमाह—

**अबाधे नैष्फल्यम् ॥ १७ ॥**

यदि विद्यया अविद्या न बाध्यते, विद्यैव न भविष्यतीति ॥ १७ ॥

बाध्यत एव इत्यत आह—

**विद्याबाध्यत्वे जगतोऽप्येवम् ॥ १८ ॥**

जगतोऽपि अविद्यात्वम् ॥ १८ ॥

---

विद्यातः अन्यत्व इति, अविद्याया इत्यादिः, तथाचाविद्यायाः विद्याभिन्नत्वरूपस्य इत्यर्थः । एतन्मते दोषं दर्शयति—ब्रह्मणोऽपीत्यादिना । ननु ब्रह्मणोऽप्यविद्यात्वे का क्षतिरित्याशङ्कायां सूत्रस्योत्तरपदं व्याचष्टे—तथाचेत्यादिना । ब्रह्मणोऽप्यविद्यात्वे अविद्याया विद्यानाश्यत्वेन ब्रह्मणोऽपि नाशापत्त्या नित्यशुद्धत्वादिरूपब्रह्मत्वं न स्यादिति भावः ॥ १६ ॥

युक्त्यन्तरमिति, अविद्याया विद्याभिन्नत्वरूपासम्भवे युक्त्यन्तरमित्यर्थः । सूत्रतात्पर्यं विवृणोति—यदीत्यादिना, विद्यैव न भविष्यतीति नैष्फल्यमित्यस्य विवरणम्, अविद्याविनाशार्थमेव विद्याया आवश्यकत्वेन अविद्याविनाशकत्वाभावे विद्यालाभार्थं कोऽपि न यतेत इति विद्यैव न सिध्येदिति भावः ॥ १७ ॥

जगतोऽपीति, न केवलं ब्रह्मण इत्यपेरर्थः । अविद्यात्वमिति विद्याभिन्नत्वमित्यादिः । तथाच जगतोऽपि विद्यया बाधः स्यादिति भावः ॥ १८ ॥

অবিদ্যার স্বরূপবিষয়ে বাধক বলিতেছেন, বিদ্যাভিন্নত্বই যদি অবিদ্যার স্বরূপ হয়, তবে বিদ্যাভিন্নত্বনিবন্ধন ব্রহ্মেরও অবিদ্যাত্ব হইতে পারে, এবং তাহা হইলে অবিদ্যার বিদ্যানাশ্যত্বনিবন্ধন ব্রহ্মেরও নাশাপত্তি হয়, নাশও স্বীকার করিলে নিত্য শুদ্ধত্বাদিরূপ ব্রহ্মত্বেরই অপলাপ হয় ॥ ১৬ ॥

যদি বিদ্যাদ্বারা অবিদ্যার নাশ না হয়, তবে পূর্ব্ব সূত্রোক্ত ব্রহ্মত্ব বাধ না হইলেও বিদ্যার সিদ্ধি হইতে পারে না, কারণ অবিদ্যানাশের জন্যই জীব বিদ্যালাভের যত্ন করিয়া থাকে, যদি বিদ্যাদ্বারা অবিদ্যার নাশই না হয়, তবে নিষ্প্রয়োজনে কে বিদ্যালাভের যত্ন করিবে? যত্ন না করিলে কিরূপেই বা বিদ্যার সিদ্ধি হইবে? ॥ ১৭ ॥

অবিদ্যার বিদ্যাবাধ্যত্ব স্বীকার করিলে বিদ্যাভিন্নত্বনিবন্ধন ব্রহ্মের ন্যায় জগতেরও অবিদ্যাত্ব ও বিদ্যানাশ্যত্ব স্বীকার করিতে হয় ॥ ১৮ ॥

अस्तु जगतोऽपि अविद्यात्वम् इत्यत्राह—

**तद्रूपत्वे सादित्वम् ॥ १९ ॥**

अनादिः इयम् अविद्या। जगतः तद्रूपत्वे अविद्यायाः सादित्वम् ॥१९॥

न कर्म्मणो जगत्कारणत्वं, स्वभावादेव जगत् उत्पद्यते इत्यत्राह—

**न धर्म्मापलापः प्रकृतिकार्य्यवैचित्र्यात् ॥ २० ॥**

प्रकृतेः नित्यत्वात् स्वभावस्य एकत्वात् धर्म्माभावात् विचित्रकार्य्यानुत्पत्तिः। तस्मात् धर्म्मभेदेन कार्य्यवैचित्र्यम्। न धर्म्मापलापः ॥ २० ॥

धर्म्मसिद्धौ प्रमाणमाह—

**श्रुतिलिङ्गादिभिस्तत्सिद्धिः ॥ २१ ॥**

'श्रुति' इति शाब्दं प्रमाणं दर्शितं, 'लिङ्ग' इति अनुमानम्। आदिशब्दात् योगिप्रत्यक्षं दर्शितम्। एभिः धर्म्मसिद्धिः ॥ २१ ॥

---

सूत्रान्तरमवतारयति— अस्त्वित्यादिना। अविद्येति भवद्भिरङ्गीक्रियत इति शेषः। तद्रूपत्वे—अविद्यारूपत्वे, सादित्वमिति स्यादिति शेषः। ध्वंसप्रतियोगिनोऽभावस्यानादित्वानुपपत्तेरित्यर्थः। तथाच भवत्सिद्धान्तहानि रिति भावः ॥ १९ ॥

स्वभावादेव जगदुत्पद्यत इति नास्तिकमतनिराकरणपरं सूत्रमवतारयति—नेत्यादिना। धर्म्मस्य:—धर्म्माधर्म्मरूपस्य। विचित्रकार्य्यानुत्पत्तिरिति, कार्य्यवैचित्र्यस्य कारणवैचित्र्यनियम्यत्वादिति भावः। उपसंहरति—तस्मादित्यादिना ॥ २० ॥

---

জগতের অবিদ্যাস্বরূপত্ব স্বীকার করিলে অবিদ্যা ও সাদি হইয়া পড়ে, কারণ জগতের সাদিত্ব উভয়বাদিসিদ্ধ। অথচ অবিদ্যাবাদীদিগের মতে অবিদ্যা অনাদি। (সুতরাং অবিদ্যাবাদীদিগের মত নির্দ্দোষ নহে॥ ১৯॥

নাস্তিকগণ বলেন "কর্ম্ম জগতের কারণ নহে, স্বভাবতঃই জগতের উৎপত্তি হয়" তাহা ঠিক নহে, কারণ তাহা হইলে প্রকৃতির নিত্যত্ব ও স্বভাবের একত্ব বশতঃ কার্য্যের বৈচিত্র্য হইতে পারে না, যেহেতু কারণের বৈচিত্র্যই বৈচিত্র্যের নিয়ামক। অতএব ধর্ম্মভেদেই কার্য্যের বৈচিত্র্য হয়, বিধায় ধর্ম্মের অপলাপ হইতে পারে না॥ ২০॥

यदि देशकालयोर्न कारणत्वं, कथं काश्मीरे कुङ्कुमं, वसन्ते चूतमुकुलोत्पत्तिः ? इति आह—

**न नियमः, प्रमाणान्तरावकाशात् ॥ २२ ॥**

न अदृष्टम् एव कारणम् इति नियमः। किन्तु अदृष्टं सहकारि-कारणं, अन्येषामपि कारणत्वं, प्रमाणसद्भावात् ॥ २२ ॥

दुःखमयसंसारदर्शनात् दुरितादृष्टमेवास्तु इत्यत्राह—

**उभयत्राप्येवम् ॥ २३ ॥**

सुखस्यापि दर्शनात् शुभादृष्टमेव अस्तु ॥ २३ ॥

दुःखाभावे सुखाभिमानात् तत्रादृष्टशब्दो मुख्यः, सुखकारणे गौणः इत्यत्राह—

**अर्थात् सिद्धिश्चेत् समानमुभयोः ॥ २४ ॥**

एतद्विपरीतसम्भवात् उभयोः तुल्यत्वम् इति ॥ २४ ॥

---

सूत्रान्तरमवतारयति—धर्म्मेत्यादिना। श्रुतिश्च "पुण्यो वै पुण्येन भवति पापः पापेने"-त्यादिः। धर्म्मसिद्धिरिति तत्सिद्धिरित्यस्य विवरणम् ॥ २१ ॥

सूत्रान्तरमवतारयितुं शङ्कते—यदीत्यादिना। सूत्रतात्पर्य्यं विवृणोति—नेत्यादिना। प्रमाणसद्भावादिति अन्वयव्यतिरेकादिरूपकारणत्वबोधकसद्भावादित्यर्थः ॥ २२ ॥

दुरितादृष्टमेवास्त्विति किं शुभादृष्टेनेति एवकारार्थः। सूत्रतात्पर्य्यमाह—सुखस्ये त्यादिना। तथाच धर्म्माधर्म्मयोस्तुल्यं प्रमाणमिति सूत्रार्थः ॥ २३ ॥

---

শ্রুতি, অনুমান ও যোগিপ্রত্যক্ষ এই ত্রিবিধ প্রমাণের দ্বারা ধর্ম্মের সিদ্ধি হয় ॥ ২১ ॥

যদি দেশ ও কালের কারণত্ব না থাকে, তবে কাশ্মীর দেশে কুঙ্কুমের ও বসন্তকালে চূতমুকুলের উৎপত্তি হয় কি প্রকারে ? এই আশঙ্কায় বলিতে-ছেন, কেবল অদৃষ্টই যে কারণ, এরূপ নিয়ম নাই, কিন্তু অদৃষ্ট সহকারি কারণ। অন্বয় ও ব্যতিরেকের সদ্ভাববশতঃ কালাদিরও কারণত্ব আছে ॥ ২২ ॥

সংসার দুঃখময় বলিয়া কেবল দুরিতাদৃষ্ট ( অধর্ম্ম ) ই যে জগতের নিমিত্ত কারণ তাহা নহে. সংসারে সুখের উপলব্ধি আছে বিধায় শুভাদৃষ্ট ( ধর্ম্ম ) ও নিমিত্ত কারণ ॥ ২৩ ॥

धर्मादीनाम् आत्मधर्मत्वं निषेधति—

अन्तःकरणधर्मत्वं धर्मादीनाम् ॥ २५ ॥

बुद्धिधर्मत्वम् । आत्मधर्मत्वे निःसङ्गत्वश्रुतिविरोधः ॥ २५ ॥

अन्यधर्मस्य अन्यत्र कार्य्यादर्शनात् वरमसत्त्वमेव धर्मादीनाम् इत्यत्राह—

गुणादीनां नात्यन्तबाधः ॥ २६ ॥

यथा पृथिव्यादीनां दृष्टत्वात् न अत्यन्तबाधः, तथा गुणादीनां धर्मादीनामपि । अन्यधर्मस्यापि अन्यत्र कार्य्यकरणं चितिच्छायापत्त्या इति उक्तम् ॥ २६ ॥

---

सूत्रान्तरमवतारयति—दुःखेत्यादिना । तत्र—दुःखकारणे, गौणः—लक्षणया दुःखानुत्पत्तिप्रयोजकपरः । एतद्विपरीतसम्भवादिति, सुखाभावे दुःखाभिमानात् सुखकारणे अदृष्टशब्दस्य मुख्यत्वं दुःखकारणे च गौणत्वमित्येवं विपरीतस्य च सम्भवादित्यर्थः । उभयोः—सुखकारणदुःखकारणयोः, तुल्यत्वं—अदृष्टशब्दस्य समानप्रवृत्तिकत्वम् ॥ २४ ॥

नैयायिकमतनिराकरणपरं सूत्रमवतारयति—धर्म्मेत्यादिना । सूत्रीयान्तःकरणशब्दस्य बुद्धिपरत्वं दर्शयितुं व्याचष्टे—बुद्धिधर्म्मत्वमिति । निःसङ्गत्वश्रुतिश्च "असङ्गो ह्ययं पुरुष" इति पूर्व्वमेवोक्ता ॥ २५ ॥

सूत्रान्तरमवतारयति—अन्येत्यादिना. वरमसत्त्वमिति बुद्धिधर्म्मस्य धर्म्मादिना बुद्धिभिन्न-

---

কেহ বলেন "দুঃখাভাবে সুখাভিমানবশতঃ দুঃখকারণেই অদৃষ্ট শব্দের শক্তি, সুখকারণে দুঃখানুৎপত্তিপ্রয়োজকত্বরূপ লক্ষণা।" তাহা ঠিক নহে, কারণ তাহা হইলে ইহার বিপরীত অর্থাৎ সুখাভাবে দুঃখাভিমান বশতঃ সুখকারণে অদৃষ্ট শব্দের শক্তি ও দুঃখকারণে সুখানুৎপত্তিপ্রয়োজকত্বরূপে লক্ষণা, এরূপ কল্পনাও হইতে পারে। অতএব সুখকারণ ও দুঃখকারণ উভয় এই অদৃষ্ট শব্দের তুল্য বৃত্তি ॥ ২৪ ॥

ধর্ম্ম ও অধর্ম্ম অন্তঃকরণের ধর্ম্ম, আত্মার ধর্ম্ম নহে, কারণ আত্মার ধর্ম্ম হইলে অসঙ্গত্বশ্রুতির বিরোধ হয় ॥ ২৫ ॥

অন্যের ধর্ম্ম দ্বারা অন্যত্র কার্য্য হইতে দেখা যায় না বলিয়া অন্তঃকরণের

दुःखाभावः सुखम् इति तत्प्रतिषेधार्थमाह—

**पञ्चावयवयोगात् सुखसंवित्तिः ॥ २७ ॥**

यद्यपि मानसप्रत्यक्षेण भावरूपं सुखमवसीयते, तथापि परबोधाय प्रमाणमपि उक्तम् । पञ्चावयवयोगादिति "द्व्यवयवमनुमानम्" इति निरस्तम् । प्रतिज्ञाहेतुदृष्टान्तोपनयनिगमनम् इति ।

---

स्वात्मनः भोगादिरूपकार्य्यस्यासम्भवात् पुरुषभोगादिसम्पादकतया धर्म्मादिस्वीकरणमसमीचीनमिति भावः । सूत्रतात्पर्य्यं वर्णयति—यद्येत्यादिना । दृष्टत्वात्—सत्त्वेन प्रतीयमानत्वात् ; धर्म्मादीनामसत्त्वं प्रति हेतुत्वेनाभिमतं व्यधिकरणतया पुरुषभोगादिसम्पादनासम्भवं निराकरोति—अन्त इत्यादिना । चितिच्छायापत्त्या—बुद्धौ चिदात्मनः प्रतिबिम्बरूपसम्बन्धेन । तथाच स्वाश्रयप्रतिबिम्बितत्वेनैव धर्म्मादीनां पुरुषभोगादिसम्पादकत्वाङ्गीकारान्न कार्य्यकारणयोर्व्यधिकरणत्व निबन्धनो दोष इति भावः ॥ २६ ॥

सुखस्य दुःखाभावरूपतामङ्गीकुर्व्वतां मतस्य निराकरणपरं सूत्रमवतारयति—दुःखेत्यादिना । "पञ्चावयवयोगात् प्रतिज्ञादिपञ्चावयवसाध्यादनुमानात्, सुखसंवित्तिः—सुखस्य सद्रूपतासिद्धि"—रिति सूत्रार्थः । ननु सुखस्य सद्रूपतया मानसप्रत्यक्षविषयत्वात् कुतमनुमानप्रदर्शनेनेत्याशङ्का-समाधानार्थं भूमिकामारचयति—यद्यपीत्यादिना । परबोधाय—सुखस्य भावरूपत्वे विप्रतिपन्नं प्रति भावरूपत्वप्रतिपादनाय, अत एव पञ्चावयवसाध्यत्वपर्य्यन्तानुसरणमपि सार्थकं स्वार्थानुमाने पञ्चावयवात्मकन्यायस्यानुपयोगित्वात् । द्व्यवयवमिति द्वौ प्रतिज्ञाहेत्वात्मकावेवावयवौ साधकतया यस्येति व्युत्पत्त्या प्रतिज्ञाहेतुमात्रसाध्यमित्यर्थकम्, एतच्च त्र्यवयवादेरप्युपलक्षणं तथा·

---

ধর্ম্মাধর্ম্মাদি দ্বারাও আত্মার সুখাদিভোগ হইতে পারে না, সুতরাং ধর্ম্মাদির সত্তা স্বীকারে কোনও প্রমাণ নাই, এই আশঙ্কায় বলিতেছেন—সৎ বলিয়া প্রতীত হওয়ায় পৃথিব্যাদির উচ্ছেদ হইতে পারে না। সেরূপ ধর্ম্মাদিরও উচ্ছেদ হইতে পারে না। অন্তঃকরণধর্ম্ম ধর্ম্মাদি দ্বারা আত্মার সুখভোগাদি কার্য্য সাধন ও বুদ্ধিপ্রতিবিম্বিতত্বনিবন্ধনই হইতে পারে, ইহা বলা হইয়াছে ॥ ২৬ ॥

কেহ বলেন, দুঃখাভাবই সুখ, (সুখ কোন ভাব পদার্থ নহে) তাহার প্রতিষেধার্থ বলিতেছেন—পঞ্চাবয়বসাধ্য অনুমানরূপ প্রমাণ দ্বারা সুখের ভাবত্বের সিদ্ধি আছে। সুখ যে ভাব পদার্থ, ইহা যদিও 'অহংসুখী' ইত্যাদি

अनेन पक्षधर्मत्वं सपक्षसत्त्वं विपक्षात् व्यावृत्तिः असत्प्रतिपक्षत्वम् अबाधितविषयत्वं सिद्धम् ॥ २७ ॥

सकृद्दर्शनात् न व्याप्तिः इत्याह—

**न सकृद्ग्रहणात् सम्बन्धसिद्धिः ॥ २८ ॥**

स्वप्रतीतिविरोधात्। तथा च वह्निरासभयोः सकृद्दर्शनात् अनुमानं स्यात्। न एवं प्रतीयते इति ॥ २८ ॥

---

वयवानां पञ्चत्वन्यूनाधिकसंख्यावादिनां सर्व्वेषामेव मतं निरस्तमित्याशयः। के ते पञ्चावयवा इत्याकाङ्क्षां पूरयति—प्रतिज्ञेत्यादिना। परार्थानुमाने पञ्चावयवस्योपयोगित्वं प्रदर्शयति—अनेनेत्यादिना। तथाहि सुखं सत् अर्थक्रियाकारित्वादिति सुखस्य भावत्वसाधकः प्रयोगः, तत्र सुखं सदिति प्रतिज्ञा, अर्थक्रियाकारित्वादिति हेतुः, यद्यदर्थक्रियाकारि तत्तत् सत् यथा विषयप्रकाशरूपार्थक्रियाकारिचक्षुश्चेतना इति दृष्टान्तः, सत्वव्याप्यपुलकादिरूपार्थक्रियाकारि च सुखमित्युपनयः, तस्मात् सुखं सदिति निगमनम्। एतेषाञ्च पञ्चावयवानां सुखस्य सत्त्वसाधकपरार्थानुमाने हेतोः पक्षधर्म्मत्वादिना पञ्चविधहेत्वाभासविघटनद्वारोपयोगित्वमिति विभावनीयमिति सङ्क्षेपः ॥ २७ ॥

सूत्रान्तरमवतारयति—सकृदित्यादिना। "सकृद्ग्रहणात एकवारं साध्यसाधनयोः सहचारदर्शनात् न सम्बन्धस्य—व्याप्तेः सिद्धिः—ज्ञान" मिति सूत्रार्थः। अत्र हेतुं पूरयति—स्वप्रतीतिविरोधादिति, प्रतीतिविरोधं विशदयति—तथाचेत्यादिना। एतच्चोपलक्षणं भूयस्स्थलानुगततया भूयः साध्यसाधनसहचारदर्शनादपि व्याप्तिग्रहासम्भवात्। कथं तर्हि व्याप्तिग्रह इति चेत् व्यभिचारादर्शनासहकृतसाध्यसाधनसहचारदर्शनादित्यनुसन्धेयम् ॥ २८ ॥

---

মানস প্রত্যক্ষদ্বারাও স্বতঃসিদ্ধ আছে, তথাপি প্রতিবাদীদিগের অবগতির জন্য প্রমাণ প্রদর্শিত হইল। "পঞ্চাবয়বযোগাৎ" বলাতে অবয়বের ন্যূনাধিক সংখ্যাবাদীদিগের মত নিরস্ত হইল। প্রতিজ্ঞা, হেতু, উদাহরণ, উপনয় ও নিগমন এই পাঁচ প্রকার অবয়ব; ইহাদের দ্বারা যথাক্রমে (হেতুতে) পক্ষবৃত্তিত্ব, নিশ্চিতসাধ্যবদ্‌বৃত্তিত্ব, নিশ্চিতসাধ্যাভাববদ্ব্যাবৃত্তত্ব, অসৎপ্রতিপক্ষিতত্ব ও অবাধিতত্বের সিদ্ধি হয় ॥ ২৭ ॥

একবারমাত্র সাধ্য ও সাধনের সহচারদর্শনে ব্যাপ্তিজ্ঞান হয় না,

कीयं व्याप्तिः ? इत्यत आह—

नियतधर्मसाहित्यमुभयोरेकतरस्य वा व्याप्तिः ॥२९॥

उभयोः इति समव्याप्तिकयोः कृतकत्वानित्यत्वयोः। एकतरस्य विषमव्याप्तिकस्य धूमस्य इति। तथा च—

यावत् व्यतिरेकित्वं शतांशेनापि शङ्क्यते।

विपक्षस्य कुतस्तावद्धेतोर्गमनिकाबलम् ॥ २९ ॥

---

व्याप्तिस्वरूपनिरूपणपरं सूत्रमवतारयितुं पृच्छति—कीयमिति। समव्याप्तिकयोरिति, समा व्याप्तिर्ययोरिति व्युत्पत्त्या परस्परव्याप्तिमतोः साध्यसाधनयोरित्यर्थः, तादृशसाध्यसाधने दर्शयितुमाह—कृतकत्वानित्यत्वयोरिति, अथ कृतकत्वमुत्पत्तिमत्त्वं अनित्यत्वञ्च ध्वंसप्रतियोगित्वमित्युभयोः ध्वंसप्रागभावयोर्व्यभिचरितत्वात्, कुतः समव्याप्तिकत्वमिति चेन्न भावत्वे सतीत्यनेनाप्युभयोर्व्विशेषणीयत्वात्। विषमव्याप्तिकस्येति, साध्यव्यापकत्वाभाववत्त्वे सति साध्यव्याप्तिमत इत्यर्थः। धूमस्येति वह्निसाध्यकधूमहेतोरित्यर्थः। सूत्रे नियतधर्मसाहित्यमिति, धर्मतायां साहित्यं धर्मसाहित्यं सहचार इत्यर्थः, तथाच नियतः—अव्यभिचरितः यः सहचारः (साध्यसामानाधिकरण्यं) स व्याप्तिरिति लक्षणम्। उभयोरित्यादिकन्तु वस्तुगतिमनुरुध्योक्तं लक्ष्ये तत्प्रवेशे प्रयोजनविरहात्। धूमवान् वह्निरित्यादावतिव्याप्तिवारणाय नियतपदम्। नियतत्वाभावे व्याप्तिविरहे प्राचीनसम्मतिं दर्शयितुमाह—तथाचेति, "विपक्षस्य—साध्याभाववत्तया निश्चितस्य, व्यतिरेकित्वं—साधनवत्त्वं यावत् शतांशेनापि (किं पुनर्व्विशेषेण इत्यपेरर्थः) शङ्क्यते—शङ्काविषयीक्रियते, तावत् हेतोः गमनिकाबलं—साध्यसाधनसामर्थ्यं कुतः ? अपितु नैवेति कारिकार्थः ॥ २९ ॥

---

কারণ, তাহা হইলে বহ্নি এবং রাসভের একবার সহচারদর্শনেও অনুমান হইতে পারে ; তাহা হয় বলিয়াও প্রতীয়মান হয় না। ২৮ ॥

যেই সাধ্য ও হেতুর পরস্পর ব্যাপ্তির সম্ভাবনা হয়, সেই সাধ্য ও সাধন সমব্যাপ্তিক, যেমন কৃতকত্ব ও অনিত্যত্ব ; আর যেই হেতুতে সাধ্যের ব্যাপকত্ব না থাকিয়া কেবল ব্যাপ্তি থাকে, তাহার নাম বিষমব্যাপ্তিক, যেমন বহ্নি-সাধক স্থলে ধূম। সেই সমব্যাপ্তিক ও বিষমব্যাপ্তিক হেতুতে যে নিয়ত সাধ্যসামানাধিকরণ্য তাহার নাম ব্যাপ্তি। প্রাচীনেরাও বলিয়াছেন,—যে পর্য্যন্ত শতাংশেও বিপক্ষে সাধনবত্ত্বের সংশয় থাকে, সে পর্য্যন্ত হেতুর গমকত্ব

तत्त्वान्तरं व्याप्तिरिति तन्निराकरोति—

**न तत्त्वान्तरं, वस्तुकल्पनाप्रसक्तेः॥ ३०॥**

तत्त्वान्तरस्वीकारेऽपि अव्यभिचारो वक्तव्यः। स एवास्तु, किं वस्तुकल्पनया? इति॥ ३०॥

स्वमतमाह—

**निजशक्त्युद्भवमित्याचार्य्याः॥ ३१॥**

अस्ति वह्निधूमयोर्निजा शक्तिः, सा द्वयोर्ग्रहणेन गृह्यते। सैव व्याप्तिरिति॥ ३१॥

---

सूत्रान्तरमवतारयति—तत्त्व इत्यादिना। सूत्रे वस्तुकल्पनाप्रसक्तेरिति व्याप्तित्वाश्रयतया ज्ञातपदार्थातिरिक्तपदार्थकल्पनाप्रसङ्गादित्यर्थः। ननु प्रामाणिकत्वे पदार्थान्तरकल्पनमपि न दोषावहमित्याशङ्कामपाकुरुते—तत्त्वान्तरस्वीकार इत्यादिना। वक्तव्य इति, अन्यथा धूमवान् वह्नेरित्यादावपि तत्सत्त्वप्रसङ्गः स्यादिति भावः। स एव—अव्यभिचार एव अव्यभिचरित सहचार एवेति यावत्, वस्तुकल्पनया—ज्ञातपदार्थातिरिक्तव्याप्तित्वाश्रयस्वीकारेण, ज्ञातवस्तुनि व्याप्तित्वकल्पनेनैवोपपत्तौ व्याप्तित्वाश्रयपदार्थान्तरकल्पनगौरवाङ्गीकारो निष्प्रयोजनक इति भावः॥ ३०॥

सूत्रान्तरमवतारयितुमाह—स्वमतमिति, अत्र परमतमाहेति भाष्यकारेणोक्तं पूर्व्वसूत्रोक्ताया व्याप्तेः सम्मतत्वासूचनेन दूषणानभिधानेन च तस्यैव समीचीनत्वं प्रतिभातीति विभावनीयम्। सैवेति गृह्यमाणा शक्तिरेवेत्यर्थः, एतदर्थेनाभाष्येव उद्भवपर्य्यन्तानुसरणमित्यवधेयम्। तथाच शक्तिशक्तिमतोरभेदेनैतन्मते पदार्थान्तरकल्पनागौरवमपि नास्तीति निगर्व्वः॥ ३१॥

---

হইবে কি প্রকারে? অর্থাৎ যে পর্য্যন্ত হেতুতে ব্যভিচারজ্ঞান থাকে, সে পর্য্যন্ত ব্যাপ্তিজ্ঞান হয় না॥ ২৯॥

কেহ বলেন, ব্যাপ্তি একটি পদার্থান্তর, তাহা ঠিক নহে; কারণ জ্ঞাতপদার্থ দ্বারা উপপত্তিসম্ভবে অযথা তত্ত্বান্তরকল্পনা নিষ্প্রয়োজন, অর্থাৎ তত্ত্বান্তর স্বীকার করিলেও অব্যভিচরিত তত্ত্বান্তরই স্বীকার করিতে হইবে, নচেৎ অতিব্যাপ্তিদোষ হইবে, অতএব সেই অব্যভিচারের ব্যাপ্তিত্ব সম্ভবে। কল্পনায় কোনও ফল নাই॥ ৩০॥

एकदेशिमतमाह—

**आधेयशक्तियोग इति पञ्चशिखः ॥ ३२ ॥**

यदि निजा शक्तिः, अव्युत्पन्नस्यापि वस्तुनो दर्शनात् 'अत्र अयं शक्तः' इति ज्ञानं स्यात्। न च एवम्। तस्मात् आधेयशक्तिः व्याप्ति इति ॥ ३२ ॥

युक्तिमाह—

**न स्वरूपशक्तिर्नियमः, पुनर्वादप्रसक्तेः ॥ ३३ ॥**

यदि स्वरूपं शक्तिः, शक्तः मन्त्रः इति पुनरुक्तं स्यात् ॥ ३३ ॥

---

एकदेशिमतसमर्थनाय पूर्वसूत्रोक्तमतान्तरं दर्शयति—यदीत्यादिना। व्याप्तेति व्याप्तिरित्यादिः। आधेयशक्तिपदार्थस्तु समाधानसूत्रे विविचयिष्यते ॥ ३२ ॥

सूत्रान्तरमवतारयितुमाह—युक्तिमाहेति, पञ्चशिखमतावलम्बी निजशक्त्यभिव्यक्तिवादिनो युक्तिमवतारयतीत्यर्थः। पुनरुक्तामिति, स्वरूपं शक्तिरिति मते शक्तशब्दस्य मन्त्रशब्दार्थ-विलक्षणार्थाप्रतिपादकत्वादित्यर्थः। तथाच पुनरुक्ततावारणाय अर्थान्तरविवक्षयाऽतिरिक्ता-वश्यकतया निजशक्त्यभिव्यक्तिवादिमतेऽपि पदार्थान्तराकल्पननिबन्धनाभिमानो [illegible] सम्भवतीति भावः ॥ ३३ ॥

---

আচার্য্যগণ বলেন, বহ্নি ও ধূমের নিজশক্তি আছে, উভয়ের সহচার দর্শন দ্বারাই তাহা পরিগৃহীত হয়। সেই গৃহ্যমাণ শক্তিই ব্যাপ্তি ॥ ৩১ ॥

পঞ্চশিখ বলেন—আধেয় শক্তিযোগের নাম ব্যাপ্তি। কারণ যদি নিজ শক্তি থাকে, তবে অব্যুৎপন্ন ব্যক্তিরও বস্তুদর্শনে "এই বস্তু ইহাতে শক্ত" এইরূপ জ্ঞান হইতে পারে, কিন্তু তাহা হয় না, অতএব আধেয় শক্তিই ব্যাপ্তি। ৩২ ।

বস্তুর স্বরূপই যে শক্তি, তাহা বলা যায় না, কারণ যদি স্বরূপই হয়, তবে "শক্ত মন্ত্র" এস্থানে পুনরুক্তি দোষ হয়, কেন না স্বরূপ-শক্তিবাদীর মতে শক্ত ও মন্ত্র শব্দের অর্থের কোনও পার্থক্য থাকে না ॥ ৩৩ ॥

युक्त्यन्तरमाह—

**विशेषणानर्थक्यप्रसक्तेः ॥ ३४ ॥**

शक्तो देवदत्त इति प्रत्ययो न स्यात्, किन्तु देवदत्तो देवदत्त इति ॥ ३४ ॥

अपरां युक्तिमाह—

**पल्लवादिष्वनुपपत्तेः ॥ ३५ ॥**

पल्लवादिषु स्वरूपस्य तादवस्थ्यात् अप्रयुक्तेऽपि मन्त्रे विषापनोदनं स्यात् ॥ ३५ ॥

समाधानमाह—

**आधेयशक्तिसिद्धौ निजशक्तियोगः समानन्यायात् ॥३६॥**

निजा चासौ शक्तिश्चेति निजशक्तिः, न तु स्वरूपमेव शक्तिः।

---

विशेषणानर्थक्यं विशदयति—शक्त इत्यादिना। न स्यादिति "स्वरूपं शक्ति"रिति मते शक्त इत्यनेन देवदत्तस्य कथञ्चिदपि विशेषाप्रतिपादनादित्यर्थः। विशेषाप्रतिपादनेऽपि यदि विशेषणं सार्थकं स्वीक्रियते तदा दोषं दर्शयितुमाह—किन्त्विति, परन्त्वित्यर्थः, इतीति, स्यादिति शेषः, तन्मते शक्तो देवदत्त इति प्रत्ययस्य देवदत्तो देवदत्त इति प्रत्ययस्याविशेषादिति भावः ॥ ३४ ॥

अपरां युक्तिमिति, शक्तेः स्वरूपत्वासम्भवे अन्यां युक्तिमित्यर्थः। सूत्रं विवृणोति—पल्लवेत्यादिना, तथाच, स्वरूपस्य मन्त्रप्रयोगात् पूर्व्वं विद्यमानत्वेऽपि विषापनोदकत्वाभावात् प्रयुक्ते च मन्त्रे विषापनोदकत्वात्तत्र मन्त्रप्रयोगजन्यातिरिक्तैव शक्तिः कल्पनीयेति भावः ॥ ३५ ॥

---

বিশেষণের আনর্থক্য বশতঃ "দেবদত্ত শক্ত" এইরূপ প্রতীতিও হইতে পারে না। (অনর্থক বিশেষণ সহকারেও প্রতীতি স্বীকার করিলে) "দেবদত্ত দেবদত্ত" এইরূপও প্রতীতি হইতে পারে ॥ ৩৪ ॥

বস্তুর স্বরূপই যদি শক্তি হয়, তবে মন্ত্রপ্রয়োগের পূর্ব্বেও পল্লবাদিতে স্বরূপের বিদ্যমানতাবশতঃ বিষের অপনোদন হইতে পারে, কিন্তু তাহা হয় না, সুতরাং মন্ত্রপ্রয়োগ দ্বারা বিষাপনোদক-শক্তির উৎপত্তি হয়, ইহাই [illegible] ॥ ৩৫ ॥

तथा च आधेयशक्तिसिद्धौ निजशक्तियोगः समानन्यायत्वात् । तथा च शक्तेः अविशेषात् आधेयशक्तियोगो वा निजशक्तियोगो वा इति समानो न्यायः । यत् च वस्तुग्रहणे प्रथमं न गृह्यते, चित्रशक्तित्वात् पदार्थानां यथास्थितोऽपि पितापुत्रसम्बन्धः विना उपदेशात् न गृह्यते । अतएव उक्तं 'निजशक्त्युद्भवम्' इति ॥ ३६ ॥

पदार्थयोः तादात्म्यं निषेधति—

---

समाधानमिति, पूर्व्वपूर्व्वसूत्रोक्तदोषाणामुद्धारमित्यर्थः । निजशक्तिरिति स्वकीया शक्तिरित्यर्थः, एतादृशव्याख्याप्रयोजनं स्फुटयति— नत्विति, तथाच न पूर्व्वोक्तदोषाणामवकाश इति भावः । नचैवं पदार्थान्तराकल्पनगौरवं इति वाच्यं, कार्य्यकारणयोरिव शक्तिशक्तिमतो-र्भेदाभेदरूपत्व एवैतद्व्याख्यानतात्पर्य्यात्, अतएव "न तु स्वरूपमेव" इत्येवकारोऽपि सङ्गच्छते इत्यवधेयम् । आधेयशक्तिसिद्धौ—आधेयशक्तेर्व्याप्तित्वसिद्धौ, निजशक्तियोग इति व्याप्ति-र्भवितुमर्हतीति शेषः । अत्र हेतुमाह—समानन्यायत्वादिति, उभयपक्ष एव युक्तेस्तुल्यत्वा-दित्यर्थः । समानन्यायत्वमेव विशदयति—तथाचेत्यादिना । अयमाशयः—आधेयशक्तिर्यदि स्वस्य यः आधेयस्तत्शक्तिरित्युच्यते, तदा धूमस्य वह्न्याधेयत्वाभावाद्व्याप्यत्वं न स्यात्, स्याच्च द्रव्यत्वादौ द्रव्यादिव्याप्यत्वं, यदि च तद्दोषादिवारणाय व्यभिचाराघ्रातसहचारव्याप्तिसाधन-सहचारग्रहसमुद्बोधितशक्तिरूपा पारिभाषिकी शक्तिरुच्यते, तदा निजशक्तिरपि तद्रूपतया एव वक्तव्यतया नाममात्रेणैव भेदादुभयोर्व्याप्तित्वे नास्ति विवादावसर इति । ननु यदि वह्नि-धूमयोस्तथाविधा निजाशक्तिरस्ति तदा तत्तद्ग्रहणकाल एव सा कथं न गृह्यते इत्यत आह— यत्त्विति । उपसंहर्त्तुमाह अत एवेति निजशक्त्युद्भवमित्यत्र व्याप्तित्वादित्यर्थः ॥ ३६ ॥

---

সমাধান বলিতেছেন—শক্তি নিজের অভিন্ন, কিন্তু সর্ব্বথা নিজস্বরূপ নহে, (যেমন কার্য্য ও কারণ অভিন্ন হইলেও কার্য্য সর্ব্বপ্রকারে কারণস্বরূপ নহে) অতএব, পূর্ব্বোক্ত পুনরুক্তাদি দোষ হইতে পারে না। আধেয় শক্তির ব্যাপ্তির সিদ্ধি হইলে নিজ শক্তিরও ব্যাপ্তিত্ব সিদ্ধি হইবে, কারণ উভয় পক্ষেই যুক্তির তুল্যতা। অর্থাৎ সমস্ত দোষের নিরাস করিয়া শক্তির ব্যাপ্তিত্ব নির্ব্বচন করিতে হইলে নিজশক্তি ও আধেয় শক্তির নামতঃই মাত্র ভেদ থাকিবে, পদার্থতঃ নহে, সুতরাং উভয় মতে কোনও বিবাদ নাই। বস্তুগ্রহণকালে যে প্রথমতঃ শক্তির জ্ঞান হয় না, পদার্থের বিচিত্র শক্তিত্বই তাহার কারণ, যেরূপ

वाच्यवाचकसम्बन्धः शब्दार्थयोः ॥ ३७ ॥

तादात्म्यपक्षे घटोऽपि श्रोत्रग्राह्यः स्यात्, शब्दोऽपि चाक्षुषो भवेत्, अग्न्याद्युच्चारणे मुखदाहादिप्रसङ्गः इति ॥ ३७ ॥

अत्र हेतुमाह—

त्रिभिः सम्बन्धसिद्धेः ॥ ३८ ॥

त्रिभिः प्रकारैः व्युत्पत्तिग्रहणात्। आप्तोपदेशात्, यथा 'अयं घटः' इति। वृद्धव्यवहारात्, यथा 'गामानय शुक्लां, दण्डेन' इति, अत्र प्रयोजकवृद्धवाक्यात् प्रयोज्यवृद्धप्रवृत्तिं दृष्ट्वा बालस्य। प्रसिद्ध-

---

पदार्थयोरिति, पदञ्च अर्थश्च पदार्थौ तयोरित्यर्थः। अर्थे शब्दस्य वाच्यत्वरूपः सम्बन्धः, शब्दे अर्थस्य वाचकत्वरूपः सम्बन्धो वर्त्तत इति सूत्राशयः ॥ ३७ ॥

अत्रेति, उक्तवाच्यत्ववाचकत्वसम्बन्धरूपशक्तिग्रहे इत्यर्थः। त्रिभिः—आप्तोपदेशवृद्धव्यवहारप्रसिद्धपदसामानाधिकरण्यरूपैः, तान् प्रकारान् क्रमशो दर्शयति—आप्तेत्यादिना, आप्तः प्रामाणिकः पुरुषः तस्य उपदेशात् "अयं घटपदवाच्य" इत्याद्याकारकनिर्देशात् घटे घटपदशक्तिग्रह इत्यर्थः। प्रयोज्यवृद्धप्रवृत्तिं—दण्डकरणकगवानयनव्यवहारं, यद्दिष्ट तद्व्यवहार-

---

পিতা ও পুত্রের পরস্পর সম্বন্ধ অবস্থিত থাকিলেও প্রথম দর্শনকালে অন্যের উপদেশ ভিন্ন পিতা বা পুত্রের বোধগম্য হয় না, সেইরূপ অব্যভিচরিত সহচার গ্রহব্যতিরেকেও সেই শক্তির গ্রহ হয় না। শক্তির এই অবগতি অভিপ্রায়েই উদ্ভব শব্দ বলিয়াছেন, উৎপত্তি অভিপ্রায়ে নহে॥ ৩৬।

কেহ বলেন, শব্দ ও অর্থ অভিন্ন, তাহা ঠিক নহে, কারণ তাহা হইলে (ঘটশব্দের ন্যায়) ঘটও শ্রোত্রগ্রাহ্য হইতে পারে, এবং ঘটের ন্যায় ঘট শব্দেরও চাক্ষুষ প্রত্যক্ষ হইতে পারে, পরন্তু অগ্নি শব্দের উচ্চারণে মুখদাহাদির আপত্তি হইতে পারে, অতএব শব্দ ও অর্থের বাচ্য ও বাচকস্বরূপই সম্বন্ধ, অর্থাৎ অর্থে শব্দের বাচ্যস্বরূপ সম্বন্ধ ও শব্দে অর্থের বাচকস্বরূপ সম্বন্ধ ইহাই সিদ্ধান্ত। ৩৭।

আপ্তোপদেশ, বৃদ্ধব্যবহার ও প্রসিদ্ধ পদের সান্নিধ্য বশতঃ শক্তিগ্রহ হয়। আপ্তোপদেশে যথা—"এইটি ঘটপদবাচ্য" এইরূপ প্রামাণিক পুরুষের উপদেশ

पदसामानाधिकरण्यात्, यथा 'पक्षी आम्रं भक्षयति' इति श्रुत्वा आम्रभक्षणार्थं जानाति, पक्षी इति तदानीं प्रतिपद्यते ॥ ३८ ॥

कार्य्ये व्युत्पत्तिः इति नियमं व्युदस्यति—

**न कार्य्ये नियम उभयथा दर्शनात् ॥ ३९ ॥**

कार्य्ये व्युत्पत्तिर्दृष्टा, यथा 'अहरहः सन्ध्यामुपासीत' इति । सिद्धार्थे च दृष्टा, यथा 'हरिर्देवाधिदेवः' । तथा हि विध्यर्थवाद-मन्त्रात्मकाः वेदाः । विधौ कार्य्यतैकार्थसमवेतायाम् इष्टसाधनतायां

---

दर्शनेन समुदितार्थबोधसम्भवेऽपि न प्रत्येकपदशक्तिग्रहः सम्भवति, तथापि गां नय, घटमानयेत्याद्यावापोद्वापाभ्यां गवादिपदानां प्रत्येकशक्तिग्रहो भवेदित्याशयः । आम्रभक्षणार्थं आम्रं भक्षयतीतिपदयोराम्रभक्षणरूपमर्थं, यो जानाति स अयं पक्षिपदवाच्य इति तदानीमवगच्छतीत्यर्थः । नैयायिकादिभिश्चोपमानादितोऽपि शक्तिग्रहं वदन्ति, तथाचोक्तं—

"शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्याद्व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥"

इत्यन्यत्र विस्तरः ॥ ३८ ॥

गामानय घटं नयेत्यादि वृद्धव्यवहारप्रयोजकवाक्यानि सर्व्वाण्येव प्रवर्त्तकत्वेन लिङादिपद-घटितानि, ततश्च तद्व्यवहारदर्शिनः शिशवोऽपि कार्य्यविषयकेनवाद्यर्थबोधं प्रत्येव गवादिपदानां सामर्थ्यमवधारयन्तः तदुत्तरमपि कार्य्यान्वितगवादौ शक्तिज्ञानेनैव तादृशगवादिकं प्रतिपद्यन्त इति कार्य्यान्वितस्वार्थे पदानां शक्तिरिति मीमांसकमतविशेषः, तन्निराकरणपरं सूत्रमवतारयति—

---

হইতে ঘটে ঘটপদের শক্তিজ্ঞান হয়। বৃদ্ধব্যবহার যথা—"দণ্ডদ্বারা শুক্ল গো আনয়ন কর" এইরূপ প্রয়োজক বৃদ্ধের বাক্যানুসারে "দণ্ডকরণক শুক্লগবা-নয়ন" রূপ আদিষ্ট বৃদ্ধের ব্যবহারদর্শনে শিশুদিগের গবাদিপদের শক্তিজ্ঞান হয়। প্রসিদ্ধপদসান্নিধ্য যথা—যে "আম্রং" "ভক্ষয়তি" এই দুই পদের অর্থ জানে, তাহার "আম্রং ভক্ষয়তি পক্ষী" এই শব্দশ্রবণেও আম্রভক্ষণকারী পক্ষি-দর্শনে পক্ষীতে পক্ষিশব্দের শক্তিগ্রহ হয়। ৩৮।

মীমাংসক বলেন লিঙাদি পদার্থরূপ কার্য্যান্বিত স্বার্থেই পদের শক্তি, তাহা ঠিক নহে; যেহেতু "অহরহঃ সন্ধ্যামুপাসীত" কার্য্যান্বিত স্বার্থে এবং

प्रामाण्यम्। विधिशक्तोन्नायकत्वेनार्थवादस्यापि पारम्पर्य्येण प्रवर्त्तकत्वात् प्रामाण्यम्। विहितस्मारकत्वेन मन्त्रस्यापि प्रामाण्यम्। यत्तु प्रवृत्तिनिमित्तत्वात् मन्त्रार्थवादयोः प्रामाण्यं, न तु प्रतिपादकत्वं, तन्न, उत्पत्तौ अस्ति प्रवृत्त्यर्थत्वं, असौ तु सिद्धार्थपरत्वमेव। तस्मात् सिद्धार्थप्रतिपादकयोरपि अर्थवादमन्त्रयोः प्रामाण्यम् इति ॥ ३८ ॥

---

कार्य्ये इत्यादिना। उभयथादर्शनादितिभागस्य तात्पर्य्यं विवृणोति—कार्य्ये व्युत्पत्तिरित्यादिना। व्युत्पत्तिः—अन्वयः, सिद्धार्थे चेति चकारेण व्युत्पत्तिरित्यनुषज्यते। विध्यर्थवादमन्त्रात्मका वेदा इति, प्रमाणमिति शेषः। अत्र विध्यर्थवादशब्दौ निषेधनामधेययोरप्युपलक्षकौ। कृतिसाध्यताज्ञानस्यापि प्रवृत्तिं प्रति कारणत्वात् प्रवर्त्तकत्वानुरोधेनाह—कार्य्यतैकार्थसमवेतायामिति, कृतिसाध्यतासमानाधिकरणायामित्यर्थः, तथाचेष्टसाधनतापदमपि बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनतापरं। विधिशक्तोन्नायकत्वेन—विधेयार्थस्य फलविशेषसाधकत्वख्यापकत्वेन, अर्थवादस्यापि—साक्षात्कार्य्यतावाचकपदाघटितस्य "सन्ध्यामुपासते ये तु नियतं शंसितव्रताः। विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम्" मित्यादेरिष्टविशेषसाधकत्वबोधकवाक्यस्यापि, पारम्पर्य्येण—इष्टविशेषसाधनताधीजननद्वारा, प्रवर्त्तकत्वात्—पुरुषप्रवृत्तिं प्रति प्रयोजकत्वात्, प्रामाण्यमिति विध्येकवाक्यतयेत्यादिः। विहितस्मारकत्वेन—यागादिरूपविधेयस्य तत्सम्पादकद्रव्यदेवतादीनाञ्च स्मृतिसाधकत्वेन। एकदेशिमतं दूषयितुमुपन्यस्यति—यत्त्वित्यादिना। प्रवृत्तिनिमित्तत्वात्—यागादिगोचरप्रवृत्तेः प्रयोजकत्वात्, प्रतिपादकत्वं—स्वार्थप्रतिपादनसामर्थ्यं, तथाच सिद्धार्थप्रतिपादने मन्त्रार्थवादयोर्नास्ति प्रामाण्यमिति तेषां सिद्धान्तः।

---

"হরির্দেবাধিদেবঃ" ইত্যাদি সিদ্ধার্থে শক্তিগ্রহ হইয়া থাকে। অতএব বিধি অর্থবাদ ও মন্ত্র সকলপ্রকার বেদই প্রমাণ, কৃতিসাধ্যতাসমানাধিকরণ ইষ্টসাধনতায় বিধির প্রামাণ্য, যাগাদির ফলবিশেষসাধকত্ব খ্যাপন দ্বারা পরম্পরায় প্রবর্ত্তকত্ব বশতঃ অর্থবাদের প্রামাণ্য। যাগাদিরূপ বিধেয় ও তৎসম্পাদক-দ্রব্যের স্মরণ জন্মায় বলিয়া মন্ত্রেরও প্রামাণ্য। কেহ বলেন, প্রবৃত্তিনিমিত্তত্ব বশতঃ ও মন্ত্র এবং অর্থবাদের প্রামাণ্য থাকিলেও স্বার্থপ্রতিপাদনে তাহাদের সামর্থ্য নাই, তাহা ঠিক নহে, কারণ উৎপত্তি বিধিতে প্রবৃত্তিনিমিত্তত্ব থাকিলেও স্বার্থপ্রতিপাদনে অবশ্যই সিদ্ধার্থপরতা স্বীকার করিতে হইবে,

अतीन्द्रियत्वाद्वेदार्थस्य कथमुभयथा व्युत्पत्तिः ? इत्यत आह—

लोकव्युत्पन्नस्य वेदार्थप्रतीतेः ॥ ४० ॥

ये एव लौकिकाः ते एव वैदिकाः इति सामान्यात् इहापि व्युत्पत्तिरिति ॥ ४० ॥

भवेदेवं, यदि वेदस्य पौरुषेयत्वं स्यात्, न चैवमित्याह—

न त्रिभिरपौरुषेयत्वाद्वेदस्य तदर्थस्याप्यतीन्द्रियत्वात् ॥ ४१ ॥

ईश्वरस्य निराकृतत्वात् अन्यस्यासम्भवात्, भ्रान्तेः पुरुषधर्मत्वेन आप्तत्वानिश्चयात् वेदस्याप्रामाण्यापत्तेरिति ॥ ४१ ॥

तदेतन्मतं दूषयितुमाह—तन्नेति । उत्पत्तौ—उत्पत्तिविधौ, अमौ—स्वार्थप्रतिपादने, उपसंहरति—तस्मादित्यादिना ॥ ३९ ॥

सूत्रान्तरमवतारयितुं शङ्कते—अतीन्द्रियत्वादित्यादिना । इहापि—वेदेऽपि, व्युत्पत्तिः—लौकिकवत् सिद्धार्थपरत्वसिद्धिरित्यर्थः ॥ ४० ॥

सूत्रान्तरमवतारयति—भवेदेवमित्यादिना । एवं—वेदेऽपि त्रिभिः सम्बन्धसिद्धिः, नचैवमिति, नच पौरुषेयत्वमित्यर्थः । "त्रिभि—पूर्वोक्ताप्तोपदेशवृद्धव्यवहारप्रसिद्धपदसामानाधिकरण्यैः न वेदे सम्बन्धसिद्धिः सम्भवती"ति सूत्रप्रतिपाद्यार्थः । अत्र हेतुमाह—वेदस्यापौरुषेयत्वादिति, ननु वेदस्यापौरुषेयत्वे तदर्थस्याप्तोपदेशासम्भवेऽपि वृद्धव्यवहारादिनैव शक्तिग्रहः स्यादित्यतो हेत्वन्तरमाह—तदर्थस्यातीन्द्रियत्वादिति, तथाच वेदार्थस्यातीन्द्रियतया तत्र वृद्धव्यवहारस्य

( অন্যথা প্রবৃত্তি জন্মাইবারও সামর্থ্য থাকে না ) অতএব সিদ্ধার্থপরমন্ত্র এবং অর্থবাদেরও অবশ্যই প্রামাণ্য স্বীকার করিতে হইবে ॥ ৩৯ ॥

যাহারা লৌকিক তাহারাই বৈদিক, সুতরাং লৌকিক শব্দের দৃষ্টান্তে বৈদিক শব্দেরও সিদ্ধার্থপরত্ব সিদ্ধ হইবে ॥ ৪০ ॥

বেদের অপৌরুষেয়ত্ব ও বেদার্থের অতীন্দ্রিয়ত্ব নিবন্ধন পূর্বোক্ত আপ্তোপদেশ, বৃদ্ধব্যবহার ও প্রসিদ্ধপদসামানাধিকরণ্য দ্বারা বেদের শক্তিগ্রহ হইতে পারে না। সাংখ্যমতে বেদের পৌরুষেয়ত্বও সম্ভবপর নাই, যে হেতু তাঁহার মতে ঈশ্বর পূর্বেই খণ্ডিত হইয়াছে, অন্য পুরুষও বেদের কর্তা হইতে পারে না,

वेदाप्रामाण्ये यागादौ अनाश्वासः इति वेदप्रामाण्यप्रतिपादनार्थमाह—

**न यज्ञादेः स्वरूपतो धर्मत्वं वैशिष्ट्यात् ॥ ४२ ॥**

वैशिष्ट्यं कालदेशपात्रापेक्षया, तन्निरपेक्षत्वे न स्वरूपतो धर्मत्वम् । अन्यथा अशुद्धकाले म्लेच्छदेशे महापातकिभिः कृताः यज्ञादयः धर्महेतवः स्युः । न चैवम् ॥ ४२ ॥

अन्यस्य फलदर्शनात् वेदप्रामाण्यमिति व्युत्पत्त्या किं क्रियते ? इत्यत्राह—

**निजशक्तिर्व्युत्पत्त्या व्यवच्छिद्यते ॥ ४३ ॥**

अयं शब्दः अत्र वाचकत्वेन मुख्यः अत्र गौणः इति व्यवच्छिद्यते ॥ ४३ ॥

प्रसिद्धपदसामानाधिकरण्यस्यासम्भवेन ताभ्यामपि न शक्तिग्रहः सम्भवतीति भावः । हेतुतयोपन्यस्तं वेदस्यापौरुषेयत्वं साधयति—ईश्वरस्येत्यादिना ॥ ४१ ॥

सूत्रान्तरमवतारयति—वेदेत्यादिना । अनाश्वासः—अविश्वास, तथाच वेदाप्रामाण्ये बहुवित्तव्ययायाससाध्ये वेदप्रतिपाद्ययागादौ—कोऽपि न प्रवर्त्तेत इति भावः । स्वरूपतः—वेदबोधितदेशकालाद्यनवच्छिन्नस्य, धर्मत्व—धर्महेतुत्व, अन्यथा—यागादेः स्वरूपतो धर्महेतुत्वे, नचैवं—नच देशकालाद्यनपेक्षयज्ञादयः धर्महेतवः स्युः । तथाच देशकालाद्यनपेक्षयागादेः धर्महेतुत्वाभावादेव देशकालादिवैशिष्ट्यबोधकवेदस्य प्रामाण्यमुपपन्नमिति भावः ॥ ४२ ॥

---

কারণ তাহা হইলে ভ্রান্তির-পুরুষধর্ম্মত্বনিবন্ধন বেদকর্ত্তাতে আপ্তত্বানিশ্চয়ে বেদের অপ্রামাণ্যের আপত্তি হয় ॥ ৪১ ॥

বেদবোধিত দেশ, কাল ও অধিকারিনিরপেক্ষ যাগাদি ধর্ম্মের হেতু নহে, অন্যথা 'অশুদ্ধকালে ম্লেচ্ছদেশে মহাপাতকিকৃত যজ্ঞাদিও ধর্ম্মের হেতু হইতে ...., কিন্তু তাহা হয় না, অতএব দেশকালাদিরূপ বৈশিষ্ট্যবোধক বেদের প্রামাণ্য অবশ্যই স্বীকার করিতে হইবে ॥ ৪২ ॥

व्युत्पत्तिसिद्धिः कथं भवति ? तत्राह—

**योग्यायोग्येषु प्रतीतिजनकत्वात्तत्सिद्धिः ॥ ४४ ॥**

प्रसिद्धाप्रसिद्धेषु लौकिकवैदिकपदार्थेषु ज्ञानजनकत्वात् व्युत्पत्तिसिद्धिः ॥ ४४ ॥

वेदनित्यत्वं निराकरोति—

**न नित्यत्वं वेदानां कार्य्यत्वश्रुतेः ॥ ४५ ॥**

श्रुतिः तावत् 'नाहरासीन्न रात्रीरासीत्' 'स तपोऽतप्यत, तस्मा

---

सूत्रान्तरमवतारयितुं शङ्कते—अज्ञस्येत्यादिना। अज्ञस्य—वेदस्यार्थमजानतोऽपि अधिकारित्वादिगुणविशिष्टस्य तदनुष्ठातुः फलदर्शनात्—स्वर्गादिरूपतत्फलश्रवणादित्यर्थः। सूत्रतात्पर्य्यं विवृणोति—अयमित्यादिना, तथाहि अज्ञोऽपि यद्यज्ञादौ प्रवर्त्तते प्रामाणिकपुरुषोपदेशादिरेव कारणम्। स च वेदार्थज्ञानसापेक्षः, वेदार्थज्ञानञ्च निरुक्तव्यवच्छेदसापेक्षं, तद्व्यवच्छेदश्च व्युत्पत्तिसापेक्ष इति व्युत्पत्तेरुपयोगित्वमव्याहतमेवेति भावः ॥ ४३ ॥

सूत्रान्तरमवतारयति—व्युत्पत्तीत्यादिना। प्रसिद्धाप्रसिद्धेष्विति तु योग्यायोग्येष्वित्यस्य विवरणम्, व्युत्पत्तिसिद्धिरिति च तत्सिद्धिरित्यस्य। ज्ञानजनकत्वादिति तत्तत्पदार्थैकविषयकज्ञानजनकत्वादित्यर्थः ॥ ४४ ॥

---

যাহারা বেদের অর্থ জানে না, অথচ বেদবোধিত অধিকারিত্বাদিবিশিষ্ট, তাহারা যজ্ঞাদি করিয়াও স্বর্গাদিরূপ ফল লাভ করে এরূপ শুনা যায়, সুতরাং বেদের শক্তিজ্ঞানের প্রয়োজন কি? এই আশঙ্কায় বলিতেছেন—"এই শব্দ এই অর্থের বাচক বলিয়া এই অর্থে মুখ্য ও এই অর্থের বাচক নহে বলিয়া এই অর্থে গৌণ" এইরূপ ব্যবচ্ছেদ ব্যুৎপত্তিদ্বারা হইয়া থাকে। এই স্থলে প্রশ্ন হইতে পারে যে, নিরুক্ত ব্যবচ্ছেদ না হইলে ক্ষতি কি? তদুত্তরে বক্তব্য এই যে, অজ্ঞ ব্যক্তি যে বেদার্থানুষ্ঠানে প্রবৃত্ত হয়, প্রামাণিক পুরুষের উপদেশাদিই তাহার কারণ, সেই উপদেশাদি বেদার্থজ্ঞানসাপেক্ষ, বেদার্থজ্ঞান নিরুক্ত ব্যবচ্ছেদসাপেক্ষ, সুতরাং নিরুক্ত ব্যবচ্ছেদের আবশ্যকত্ব অনিবার্য্য ॥ ৪৩ ॥

প্রসিদ্ধ লৌকিক পদার্থবিষয়ক ও অপ্রসিদ্ধ বৈদিক পদার্থবিষয়ক একবিধ বোধ বৃদ্ধপরম্পরা জন্মায় বলিয়াই ব্যুৎপত্তিসিদ্ধি অর্থাৎ শক্তিগ্রহ স্বীকার করিতে হয় ॥ ৪৪ ॥

तपस्तेपानात्त्रयो वेदा अजायन्त'। अनुमानं च वेदोऽनित्यः कृतकत्वात् इत्यादि। प्रत्यक्षेणापि उच्चरितप्रध्वंसिनो वर्णाः इति दृश्यन्ते। यस्तु 'स एवायं' कवर्णः' इति प्रत्ययः, स सामान्यविषयः॥ ४५ ॥

अनित्यत्वात् पौरुषेयाः वेदाः इति, तत्राह—

न पौरुषेयत्वं तत्कर्तुः पुरुषस्याभावात् ॥ ४६ ॥

निराकृत ईश्वरः इति अभिसन्धिः ॥ ४६ ॥

श्रुतिरिति, वेदानां जन्यत्वे श्रुतिरित्यर्थः। अनुमानमपि वेदानित्यत्वे प्रमाणं भवितुमर्हतीति—दर्शयति अनुमानञ्चेत्यादिना। दृश्यन्त इति, तथाच उत्पन्नप्रध्वंसित्वाद्वर्णाना-मनित्यत्वे वर्णात्मकस्य वेदस्यानित्यत्वमप्यसिद्धमपीति भावः। सामान्यविषय इति साजात्य-विषय इत्यर्थः, तथाच "स एवायं ककारः" इत्यस्य तत्सजातीयोऽयं ककारः इत्यर्थकतया वर्णाना-मनित्यत्वेऽपि न बाध इति भावः ॥ ४५ ॥

सूत्रमवतारयति—अनित्यत्वादित्यादिना। अथेश्वररूपपुरुष एव तत्कर्त्ताऽस्तु? इत्यत आह—निराकृत इति, ईश्वरासिद्धेरिति सूत्रेणेति शेषः ॥ ४६ ॥

বেদের নিত্যত্ব খণ্ডন করিতেছেন—বেদ নিত্য নহে, যেহেতু "ত্রয়ো বেদা অজায়ন্ত" অর্থাৎ তিনটি বেদই জন্মিয়াছিল, এইরূপ শ্রুতি আছে। "কৃতকত্ব-নিবন্ধন বেদ অনিত্য" এইরূপ অনুমানও বেদের অনিত্যত্বে প্রমাণ হইতে পারে। বর্ণ যে উচ্চারিত ও বিনষ্ট হয়, ইহা প্রত্যক্ষতঃ ও সর্ব্বানুভবগম্য, (সুতরাং বর্ণাত্মক বেদের অনিত্যত্বে প্রত্যক্ষও প্রমাণ) "এইটি সেই কবর্ণ" এইরূপ যে প্রত্যভিজ্ঞা হয়, তাহা সামান্য (সাজাত্য) বিষয়ক, অর্থাৎ তাহার অর্থ এই যে "এইটি সেই জাতীয় কবর্ণ" ফলে এই প্রত্যভিজ্ঞা দ্বারাও বর্ণের অনিত্যত্বের ব্যাঘাত হইল না ॥ ৪৫ ॥

বেদ অনিত্য হইলেও পৌরুষেয় নহে, কারণ বেদের স্রষ্টা হইবার উপ-যুক্ত পুরুষেরই অভাব। ঈশ্বরই তাদৃশ পুরুষ, ইহাও বলা চলে না, যে হেতু "ঈশ্বরাসিদ্ধেঃ" এই সূত্রদ্বারা পূর্ব্বেই ঈশ্বর নিরাকৃত হইয়াছেন ॥ ৪৬ ॥

অন্য: এব কৰ্ত্তা ভবিষ্যতি ইত্যত আহ—

ন, মুক্তামুক্তযোরযোগ্যত্বাৎ ॥ ৪৭ ॥

মুক্তস্য নিঃসঙ্গত্বাৎ কর্তৃত্বাযোগাৎ, অমুক্তস্য যুগপদুপাদানানভিজ্ঞত্বাৎ ইতি ॥ ৪৭ ॥

অপৌরুষেয়ত্বাৎ তর্হি নিত্যত্বম্, অত আহ—

নাপৌরুষেয়ত্বান্নিত্যত্বমঙ্কুরাদিবৎ ॥ ৪৮ ॥

স্পষ্টম্ ॥ ৪৮ ॥

অঙ্কুরাদীনামপি সকর্তৃকত্বং কার্য্যত্বাদিতি পক্ষে মুক্তস্য কর্তৃত্বম্ ইত্যত আহ—

তেষামপি তদ্যোগে দৃষ্টবাধাদিপ্রসক্তিঃ ॥ ৪৯ ॥

অঙ্কুরাদীনাং কর্ত্তুঃ অদৃশ্যত্বাৎ প্রত্যক্ষবাধঃ। অযোগ্যশ্চ কর্ত্তা নাস্তীত্যুক্তম্। আদিশব্দাৎ ব্যাপ্যত্বাসিদ্ধির্দর্শিতা ॥ ৪৯ ॥

ন মুক্তামুক্তয়োরিতি, বেদকর্তৃত্বমিতি শেষঃ। অযোগ্যত্বং বিশদয়তি—মুক্তস্যেত্যাদিনা। নিঃসঙ্গত্বাৎ কর্তৃত্বপ্রযোজকাভিমানাদিশূন্যত্বাৎ। যুগপৎ একদা সর্ব্বজ্ঞাদি ইতি যাবৎ, উপাদানানভিজ্ঞত্বাৎ বেদনির্ম্মাণোপযোগিসর্ব্ববিষয়কজ্ঞানাভাবাদিত্যর্থঃ ॥ ৪৭ ॥

অঙ্কুরাদিবদিতি, যথাঙ্কুরাদিরপৌরুষেয়োঽপি ন নিত্যঃ, তথাপৌরুষেয়বেদোঽপি ন নিত্য ইত্যর্থঃ। তথাচাঙ্কুরাদৌ ব্যভিচরিতত্বান্নাপৌরুষেয়ত্বং নিত্যত্বব্যাপ্যমিতি নাপৌরুষেয়ত্বান্নিত্যত্বাপত্তিরিতি ভাবঃ ॥ ৪৮ ॥

---

মুক্ত বা অমুক্ত পুরুষও বেদের কর্ত্তা হইতে পারে না, কারণ মুক্ত পুরুষ নিঃসঙ্গ অর্থাৎ কর্তৃত্বের প্রয়োজক অভিমানাদিবর্জ্জিত, সুতরাং কর্ত্তা হইবার অযোগ্য, অমুক্ত পুরুষও বেদনির্ম্মাণোপযোগিসর্ব্বজ্ঞতাদিরহিত বলিয়াই বেদ রচনা করিবার অনুপযুক্ত ॥ ৪৭ ॥

পূর্ব্বে যদি অপৌরুষেয় হয়, তবে নিত্য হউক; এই আপত্তিও ঠিক নহে, কারণ, অপৌরুষেয় হইলেই যে নিত্য হয়, এরূপ কোন নিয়ম নাই, যেহেতু অঙ্কুরাদি অপৌরুষেয় হইলেও নিত্য নহে ॥ ৪৮ ॥

अनित्यत्वपौरुषेयत्वयोः व्याप्तिर्नास्तीत्याह—

यस्मिन्नदृष्टेऽपि कृतबुद्धिरुपजायते, तत्-पौरुषेयम् ॥ ५० ॥

यथा घटादिषु न तु द्रुमादिषु । अदृष्टेऽपीति कर्त्तरि, अदृष्टेऽपि । न कार्य्यमात्रं सकर्त्तृकं, किन्तु कार्य्यविशेषः ॥ ५० ॥

---

सूत्रान्तरमवतारयति—अङ्कुरेत्यादिना । तेषामपि—अङ्कुरादीनामपि, तद्योगे कर्त्तृयोगे, दृष्टस्य सकर्त्तृकत्वाभावस्य बाधादिप्रसक्तिरिति सूत्रार्थः । इममेवार्थं वृत्तिकारो दर्शयति—अङ्कुरेत्यादिना । नन्वदृष्टय एव मुक्तः कर्त्ताऽस्त्वित्याशङ्कां निराकर्त्तुमाह—अयोग्यश्चेति, कर्त्तृत्वप्रयोजकाभिमानादिशून्य इत्यर्थः । उक्तमिति न मुक्तामुक्तयोरिति सूत्रे चोक्त शेषः । "व्याप्त्यसिद्धिरिति "यत् पौरुषेयं तत् शरीरजन्यमिति व्याप्तिर्लोके दृष्टा, तस्याबाधादिरेव सुति आदित्यर्थः ।" क्वचित् पुस्तके इत्यादिवायं पाठो दृश्यते ॥ ४९ ॥

सूत्रे यस्मिन् कृतबुद्धिरिति यद्विशेष्यिका कृतिजन्यत्वप्रकारिका बुद्धिरित्यर्थः । कर्त्तर्यदृष्टेऽपि यत्र कृतबुद्धिर्जायते तान् दर्शयितुमाह—यथा घटादिष्विति । न तु द्रुमादिष्विति कृतबुद्धिर्जायते इति शेषः । फलितं दर्शयति—नेत्यादिना । तथाच कार्य्यत्वहेतुना पौरुषेयत्वसाधनमसमीचीनमिति भावः ॥ ५० ॥

---

কার্য্যত্ব হেতু দ্বারা অঙ্কুরাদিরও সকর্ত্তৃকত্ব সাধিত হইবে এবং মুক্ত পুরুষই অঙ্কুরাদির কর্ত্তা হইবে, এই আশঙ্কায় বলিতেছেন—অঙ্কুরাদিরও কর্ত্তৃযোগ স্বীকার করিলে অঙ্কুরাদির কর্ত্তা পরিদৃষ্ট হয় না বিধায় প্রত্যক্ষের বাধ হয়, অযোগ্য মুক্ত পুরুষ যে কর্ত্তা হইতে পারে না, ইহাও পূর্ব্বসূত্রেই বলা হইয়াছে—। পরন্তু "যে পৌরুষেয়, সেই শরীরজন্য" এই লোকসিদ্ধ ব্যাপ্তিরও বাধা ঘটে ॥ ৪৯ ॥

কর্ত্তা পরিদৃষ্ট না হইলেও যে বস্তুর দর্শনমাত্র ইহা কৃত অর্থাৎ জ্ঞানেচ্ছাদিমৎ পুরুষ নির্ম্মিত এইরূপ বুদ্ধি জন্মে, তাহাই পৌরুষেয়, যেমন ঘটাদিতে তাদৃশ বুদ্ধি জন্মে বলিয়া ঘটাদি পৌরুষেয়, কিন্তু বৃক্ষাদিতে তাদৃশ বুদ্ধি জন্মে না বলিয়া বৃক্ষাদি পৌরুষেয় নহে। অতএব কার্য্যমাত্রই সকর্ত্তৃক নহে, কিন্তু কার্য্য-

পরতঃ প্রামাণ্যং দূষয়তি—

**নিজশক্ত্যভিব্যক্তেঃ স্বতঃ প্রামাণ্যম্ ॥ ৫১ ॥**

নিজশক্তিজ্ঞানজনকসামগ্রীমাত্রাধীনং প্রমাণানাং প্রামাণ্যং, ন তু অধিকং গুণমপেক্ষতে, উৎপত্তিপক্ষে। জ্ঞপ্তিপক্ষেঽপি ঔৎসর্গিকী জ্ঞানগ্রাহকাণাং প্রামাণ্যবোধশক্তিঃ। তদভিব্যক্তেঃ স্বতঃ প্রামাণ্যং ঝটিতি প্রবৃত্তেশ্চ। যত্রাপি শঙ্কানিবৃত্তয়ে প্রামাণ্যজিজ্ঞাসার্থং প্রমাণানুসরণং তত্রাপি কারণদোষোদ্ধারণায়, ন গুণায়। অত এবাপ্রামাণ্যং পরতঃ, তত্র দোষস্যাপি কারণত্বাৎ ইতি ॥ ৫১ ॥

---

গুণবিশেষাদেব প্রামাণ্যমুৎপদ্যতে ইতি কেচিৎ, তন্মতদূষকতয়া সূত্রমবতারয়তি—পরত ইত্যাদিনা। স্বতঃ পদং সাবধারণমিত্যভিপ্রেত্য স্বতঃ প্রামাণ্যমিত্যংশং ব্যাচষ্টে—নিজশক্তীত্যাদিনা, অবধারণব্যবচ্ছেদ্যং দর্শয়তি,—নত্বিত্যাদিনা। অত্র হেতুমাহ—নিজশক্ত্যভিব্যক্তেরিতি, নিজশক্ত্যা নিজশক্তিজ্ঞানজনকসামগ্রীমাত্রেণ অভিব্যক্তেঃ—প্রামাণ্যস্যোৎপত্তেরিতি তদর্থঃ। গুণবিশেষজ্ঞানাধীনং প্রামাণ্যজ্ঞানমিতি যৎ কৈশ্চিদাচষ্যতে, তন্মতং দূষয়িতুমাহ—জ্ঞপ্তিপক্ষেঽপীতি। ঔৎসর্গিকী—কারণান্তরনিরপেক্ষা, জ্ঞানগ্রাহকাণাং—জ্ঞানজনকসামগ্র্যাঃ, প্রামাণ্যবোধশক্তিঃ—প্রামাণ্যপ্রকাশসামর্থ্যং। ততঃ কিমিত্যত আহ—তদভিব্যক্তেঃ স্বতঃ প্রামাণ্যমিতি, তয়া ঔৎসর্গিক্যা শক্ত্যৈব অভিব্যক্তেঃ—প্রামাণ্যস্য প্রতীতেঃ স্বতঃ—গুণবিশেষজ্ঞানানপেক্ষমেব প্রামাণ্যং—প্রামাণ্যমেব ইতি তদর্থঃ। হেত্বন্তরং পূরয়তি—ঝটিতি প্রবৃত্তেশ্চেতি, গুণবিশেষজ্ঞানাদিকমনপেক্ষ্যৈব প্রবৃত্তেরিত্যর্থঃ। নন্বেবং লোকপ্রসিদ্ধা প্রামাণ্যপরীক্ষার্থং পরীক্ষকাণাং প্রবৃত্তিরফলা? ইত্যাশঙ্কা-

বিশেষ, সুতরাং কার্য্যত্ব হেতু দ্বারা বেদের পৌরুষেয়ত্ব সাধন সঙ্গত হইতে পারে না ॥ ৫০ ॥

"কেহ বলেন, করণাদিগতগুণ হইতেই প্রমাণে প্রামাণ্যের উৎপত্তি হয়" সেই মত দূষিতেছেন—কেবল নিজশক্তিজ্ঞানজনক সামগ্রী হইতেই প্রমাণে প্রামাণ্যের উৎপত্তি হয়, অধিক কোনও গুণের অপেক্ষা নাই। যেহেতু জ্ঞান-জনক সামগ্রীতে যে প্রামাণ্যবোধক স্বাভাবিক শক্তি আছে, তদ্দ্বারাই প্রামাণ্যের প্রতীতি হয় ও গুণবিশেষ জ্ঞানের অপেক্ষা না করিয়াই প্রবৃত্তি জন্মে, অতএব প্রামাণ্যজ্ঞানেও অন্য কোনও গুণজ্ঞানের অপেক্ষা নাই। যে স্থলে অপ্রামাণ্য শঙ্কানিবৃত্তির জন্য প্রামাণ্য জিজ্ঞাসার্থ প্রামাণ্যের অনুসন্ধান

बौद्धमतं दूषयति—

**नासतः ख्यानं नृशृङ्गवत् ॥ ५२ ॥**

इदं रजतमिति असदेव शुक्तिरजततादात्म्यं प्रतिभाति । तत् न, असतः अर्थक्रियाविरहात् ज्ञानजनकत्वानुपपत्तेः, यथा मनुष्यशृङ्गस्य ॥ ५२ ॥

प्राभाकरमतं दूषयति—

**न, सतो बाधदर्शनात् ॥ ५३ ॥**

इदं रजतम् इति 'इदम्' इति पुरोवर्त्तिविषयं, 'रजतम्' इति स्मरणम् । द्वे इमे संवित्ती । भेदाग्रहात् प्रवृत्तिः । न, अभेद-

मपनयति—यद्यपीत्यादिना । प्रकृतानिवर्त्तयति—बाधदर्शनादिजन्याप्रामाण्यशङ्काया निरासाय, प्रमाणा-नुसरणं—अप्रामाण्यग्राहकविघटकसामग्र्यन्वेषणम् । अत एवेति—प्रामाण्यस्य स्वतो ग्राह्यत्वादित्यर्थः, दोषस्यापीत्यपिशब्दः बाधज्ञानसमुच्चायकः । तथाच वेदस्यापि नाप्रामाण्यमिति भावः ॥ ५१ ॥

असत्ख्यातिवादिबौद्धमतस्य निराकरणायादौ तन्मतं दर्शयति—इदमित्यादिना । निराकरोति—तन्नेत्यादिना । असतः—असत्तयाभिमतस्य शुक्तिरजततादात्म्यादेः । नृशृङ्गवदिति दृष्टान्तं विशदयति—यथा मनुष्यशृङ्गस्येति न ज्ञानमित्यर्थः ॥ ५२ ॥

अख्यातिवादिनः प्रभाकरस्य मतं दूषयितुमादावुपन्यस्यति—इदमित्यादिना । पुरोवर्त्ति-विषयमिति, दोषवशेन तद्गतशुक्तित्वसामान्यविशेषस्याग्रहणात् पुरोवर्त्तिद्रव्यमात्रविषयकं प्रत्यक्ष-

---

করা হয়, তাহাও কারণের দোষোৎসারণের জন্য গুণজ্ঞানাদির জন্য নহে। অতএব অপ্রামাণ্য ও অপ্রমাণ্য জ্ঞানেই জ্ঞানগ্রাহক সামগ্রীর অতিরিক্ত কারণের অপেক্ষা আছে, যেহেতু তাহাতে দোষও কারণ। ফলে বেদও অপ্রমাণ নহে॥ ৫১॥

অসৎখ্যাতিবাদী বৌদ্ধগণের মত দূষিতেছেন—বৌদ্ধগণ বলেন, "ইদং রজতং" জ্ঞানে অলীক শুক্তি ও রজতের অভেদের ভান হইয়া থাকে। তাহা ঠিক নহে, কারণ অর্থক্রিয়াকারিত্বের অভাববশতঃ অসৎ পদার্থের জ্ঞান-জনকত্ব থাকিতে পারে না। যেমন "মনুষ্যশৃঙ্গরূপ" অলীক পদার্থের জ্ঞান-জনকত্ব নাই। ৫২

ভেদগ্রহণাত্ প্রবৃত্তিদর্শনাত্, "নেদং রজতম্" ইতি বাধাচ্চ। ন চ সম্যগ্‌জ্ঞানস্য বাধোঽস্তি। অন্যথা হি "অয়ং ঘটঃ" ইতি জ্ঞানে জাতে "নায়ং ঘটঃ" ইতি জ্ঞানং স্যাত্ ॥ ৫২ ॥

নিত্যর্থঃ। অখ্যাতিমিতি গ্রহণতয়া সংস্কারোদ্বোধকমিথোতন্নন্ন প্রতীতদ্বয়ভাবত্বেঽপি দোষবশাদগৃহীতভেদাবিষয়ত্বং গ্রহণাৎ ব্যবহিতং অখ্যাতিনিত্যর্থঃ। ফলিতং দর্শয়তি—দ্বে ইমে সংবিত্তী ইতি, তথাচৈতন্মতে ইদং রজতমিত্যত্র ন ভ্রান্তিজ্ঞানমতাদাত্ম্যাদি, পরন্তু রজতং ইদমিতি চ অনুভবস্মৃতিরূপে দ্বে এব বিজ্ঞানে ভবত ইতি ভিন্নম্। ননু যদি বিভক্তজ্ঞানদ্বয়মেবানুমতং, তদা কথং তদানীং তত্র রজতার্থিনঃ প্রবৃত্তিরিত্যত আহ—ভেদাগ্রহাদিতি, তদ্বিষয়োস্তদ্বিষয়যোশ্চ দোষবশাদবিবেকাগ্রহাদিত্যর্থঃ। তদেতন্মতং দূষয়তি—নেত্যাদিনা। অভেদগ্রহণাত্—ইদন্তাবচ্ছিন্নে রজতত্বাভেদজ্ঞানাত্, নহি তদভেদজ্ঞানং বিনা ভেদাগ্রহমাত্রাত্ প্রবৃত্তির্ভবিতুমর্হতি অগ্রহণনিবন্ধনস্য ন চৈতন্যব্যবহারস্য ইদং নেত্যাজ্ঞানমাত্র পূর্ব্বকত্বাসম্ভবাদিতি ভাবঃ। অথাগ্রহণমাত্রং প্রবৃত্তিং জনয়তু, কিন্তু গ্রহণমেব এব মিথঃ স্বরূপতো বিষয়তশ্চাগৃহীতভেদে প্রবৃত্তিং জনয়তামিত্যাশঙ্কায়াং দোষান্তরমাহ—নেদমিত্যাদিনা, ননু ভবতু বাধস্ততঃ কিমিত্যত আহ—নচেতি, তথা চৈতন্মতে বিভক্তজ্ঞানদ্বয়স্য যথার্থতয়া নেদং রজতমিতি বাধো ন সম্ভবতীতি ভাবঃ। যথার্থজ্ঞানস্য বাধাঙ্গীকারে প্রতিবন্ধং দর্শয়তি—অন্যথা হতীত্যাদিনা ॥ ৫২ ॥

অখ্যাতিবাদী প্রভাকরের মত দূষিতেছেন—"ইদং রজতং" এই স্থলে "ইদং" এইটি কেবল পুরোবর্ত্তী পদার্থবিষয়ক প্রত্যক্ষ ও "রজতং" এইটি কেবল রজতবিষয়ক স্মরণ, সুতরাং ঐস্থলে প্রত্যক্ষ ও স্মরণরূপ দুইটি জ্ঞানই জন্মিয়া থাকে। দোষবশতঃ সেই জ্ঞানদ্বয়ের ও তাহাদের বিষয়ের ভেদজ্ঞান না থাকাতেই সেই স্থলে শুক্তিতেও রজতপ্রার্থীর প্রবৃত্তি জন্মে"। ইহাই প্রভাকরের মত। বস্তুতঃ তাহা ঠিক নহে, কারণ অভেদজ্ঞান হইতেই প্রবৃত্তি হইতে দেখা যায় (ভেদাগ্রহ মাত্র হইতে দেখা যায় না) ও "নেদং রজতং" এই জ্ঞানদ্বারা বাধা হইতে দেখা যায়। যথার্থ জ্ঞানের কখনও বাধা হয় না। যথার্থ জ্ঞানেরও বাধ স্বীকার করিলে "এইটি ঘট" এই জ্ঞান জন্মিলে ও "এইটি ঘট নয়" এই জ্ঞান বাধক হইতে পারে। ফলে প্রভাকরের মতেও "ইদং রজতং" এইস্থলে প্রত্যক্ষ ও স্মরণরূপ দুইটি জ্ঞান স্বীকার করিলে সেই উভয় জ্ঞানেরই সত্যতানিবন্ধন বাধ হইতে পারে না, ইহাই দোষ হয় ॥ ৫৩ ॥

वेदान्तिमतं दूषयति—

नानिर्वचनीयस्य, तदभावात् ॥५४॥

इदं रजतम् इति असत्त्वे अपरोक्षज्ञानाभावात् सत्त्वे बाधाभावात्, अतः सदसद्विलक्षणानिर्वचनीयत्वम् । तथा च—

न सत्त्वे बाधसंवित्तिर्न भानमसतोऽपि च ।
न द्वयात्मविरुद्धत्वादतस्तत्त्वान्तरं कुतः ॥
मायामयत्वसिद्धौ तु प्रपञ्चस्य प्रमाणतः ।
प्रत्यक्षादिप्रमाणानां प्रामाण्यं व्यावहारिकम् ॥

---

अनिर्व्वचनीयख्यातिवादिनां वेदान्तिनां मतं दूषयितुमादौ दर्शयति—इदमित्यादिना । असत्त्वे—असत्यत्वे अपरोक्षज्ञानाभावात्—प्रत्यक्षासम्भवात्, सत्यत्वे—व्यवहारिकसत्ताशालित्वे बाधाभावात्—ब्रह्मसाक्षात्कारातिरिक्तज्ञानबाध्यत्वासम्भवात्, सदसद्विलक्षणानिर्व्वचनीयत्वमिति, सत् व्यवहारिकपारमार्थिकसत्त्ववत्, असत्—अत्यन्ततुच्छं तदतिरिक्तानिर्व्वचनीयत्वं प्रातिभासिकरजतादेरित्यर्थः । तथाच इदं रजतमित्यादौ रजतादेर्नापरोक्षज्ञानविषयत्वादत्यन्ततुच्छत्वं "नेदं रजत"मिति ज्ञानबाध्यत्वाच्च न व्यवहारिकपारमार्थिकत्वमिति तद्विलक्षणानिर्व्वचनीयत्वमिति वेदान्तिमतं पर्य्यवसितम् । एतन्मतसमर्थनाय पूर्व्वपक्षोत्तरभाविनोप निबद्धान् प्राचीनश्लोकानुत्थापयितुमाह—तथाचेति । सत्त्वे—सत्यत्वे न बाधसंवित्तिः—संसारदशायामिव "नेदं रजत"मिति यथार्थबाधज्ञानं असतोऽपि अत्यन्ततुच्छस्यापि न भानं—न ज्ञानं, द्वयात्म्यं—सदसदुभयात्मकत्वं, विरुद्धत्वात्—सत्त्वासत्त्वयोरेकत्रावर्त्तमानत्वात्

---

অনির্ব্বচনীয় খ্যাতিবাদী বেদান্তির মত দূষিতেছেন—"ইদং রজতং" ইত্যাদি জ্ঞানের বিষয় অসত্য হইলে প্রত্যক্ষ হইতে পারে না, সত্য হইলেও "নেদং রজতং" ইত্যাদি জ্ঞানদ্বারা বাধ হইতে পারে না, অতএব সৎ ও অসৎ হইতে বিলক্ষণ অনির্ব্বচনীয়ই জ্ঞানের বিষয় বলিতে হইবে" ইহাই হইল বেদান্তির মত, প্রাচীনগণও পূর্ব্বপক্ষ ও উত্তর ভাবে ইহার সমর্থন করিয়াছেন, যথা—বস্ত সত্য হইলে সংসারদশাতেই "নেদং রজতং" ইত্যাদি যথার্থ বাধজ্ঞান হইতে পারে না, অথচ অসৎ পদার্থেরও জ্ঞান হইতে পারে না, সৎ ও অসৎ এই উভয় স্বরূপও হইতে পারে না, কারণ সত্ত ও অসত্ত এই দুইটি বিরুদ্ধ ধর্ম্ম । অতএব অনির্ব্বচনীয়

अद्वैतागमवाक्यं तु तत्त्वावेदनलक्षणम् ।
प्रमाणभावं भजते बाधवैधुर्य्यहेतुतः ॥
तस्मान्मायामयत्वेऽपि युक्ता ब्रह्मणि मानता ।
अद्वैतागमवाक्यानामिति तावद्व्यवस्थितिः ॥

तन्न, इदं रजतम् इत्यनेनैव निर्वचनीयत्वात्, 'न सन्नासन्' इति अनिर्वचनीयत्वेन निर्वचनाच्च ॥ ५४ ॥

---

अतः—एभ्यो हेतुभ्यः, तत्त्वान्तरं—अनिर्व्वचनीयं तत्त्वं, कुतः ? कथं सम्भवतीति वेदान्तिनं प्रति पूर्व्वपक्षः । तत्समाधानमाह—मायेत्यादिना । प्रमाणतः—अनुमानादिप्रमाणेभ्यः, प्रपञ्चस्य—दृश्यमानस्य विश्वस्य मायामयत्वसंसिद्धौ—ब्रह्मसाक्षात्कारकालीनज्ञानाविषयत्वे निर्णीते प्रत्यक्षादिप्रमाणानां प्रामाण्यं व्यवहारिकं—सांसारिकव्यवहारसाधनीपर्व्विं न तु पारमार्थिकमित्यर्थः । अथ तर्हि कस्य प्रामाण्यं पारमार्थिकमित्याकाङ्क्षायामाह—अद्वैतागमवाक्यन्त्विति, तत्त्वावेदनलक्षणं—पारमार्थिकतत्त्वप्रतिपादकं, "तत्त्वमसि श्वेतकेतो" इत्याद्यागमवाक्यं बाधवैधुर्य्यहेतुतः—कालत्रयेऽपि बाधाभाववशात् प्रमाणभावं—पारमार्थिकप्रामाण्यं भजते इत्यर्थः । उपसंहरति—तस्मादित्यादिना । मायामयत्वेऽपीति प्रपञ्चस्येत्यादिः । इति प्रपञ्चस्यानिर्व्वचनीयमायामयत्वे नानिर्व्वचनीयत्वं केवलब्रह्मणः पारमार्थिकत्वमित्येव, अद्वैतागमवाक्यानां व्यवस्थितिः व्यवस्थासिद्धान्त इति यावत् । एतन्मतं दूषयति—तन्नेत्यादिना । इदं रजतमिति ज्ञानस्य चान्यथाऽनुपपत्त्या तेनावश्यं निर्व्वचनं "इदमनिर्व्वचनाय" मित्यनेनापि अनिर्व्वचनीयत्वेन निर्व्वचनं भवतीति नानिर्व्वचनीयत्ववादो युक्तिसह इति भावः ॥ ५४ ॥

তত্ত্বান্তর হয় কিরূপে ? উত্তর—অনুমানাদি প্রমাণদ্বারা এই বিশ্বপ্রপঞ্চের মায়াময়ত্ব সিদ্ধি হইলে প্রমাণের প্রামাণ্যও ব্যবহারিক মানিতে হইবে। তত্ত্বাবেদক অদ্বৈতসমর্থক বেদবাক্যই বাধাভাববশতঃ প্রমাণ। অতএব প্রপঞ্চের অনির্ব্বচনীয় মায়াময়ত্ব হইলেও ব্রহ্মের প্রামাণ্য যুক্তিসিদ্ধ। ফলে প্রপঞ্চের অনির্ব্বচনীয়তা ও ব্রহ্মের পারমার্থিকতা ইহাই অদ্বৈত বাক্যের সিদ্ধান্ত। এই বেদান্তিসিদ্ধান্তও ঠিক নহে, কারণ 'ইদং রজতম্' ইত্যাদি দ্বারাই নির্ব্বচনীয় বলিতে হইবে। "নসন্নাসন্" ইত্যাদি বাক্যদ্বারা অনির্ব্বচ-

न्यायमतं दूषयति—

**नान्यथाख्यातिः, स्ववचोव्याघातात् ॥ ५५ ॥**

इदं रजतम् इति शुक्तिः एव रजतात्मना अवभासते इति । न । अन्यत् अन्यात्मना अवभासते इति संविद्विरुद्धम् ॥ ५५ ॥

आरोपितरजतमेव तत्रावभासते इति स्वमतमाह—

**सदसत्ख्यातिर्बाधाबाधात् ॥ ५६ ॥**

इदं रजतम् इति पुरोवर्त्तिविषयतया सत्, अबाधनात् । रजत विषयतया तु असत्, बाधात् । तस्मात् सदसतो तत्त्वम् ॥ ५६ ॥

अन्यथाख्यातिवादिनो मतमादावुत्थापयति—इदमित्यादिना । सूत्रे स्ववचो व्याघातादिति, "अन्यथाख्याति"रिति वचस एवासिद्धेरित्यर्थः, तथाहि अन्यतान्यात्मकत्वस्य शशविषाणतुल्यत्व-मन्यथाशब्देनोच्यते, तस्य च ज्ञानं ख्यातिशब्देनेति तद्वच एव व्याहतम्, असतो भानासम्भवस्या-न्यथाख्यातिवादिभिरप्युक्तत्वात् । इममेवार्थं मनसि निधाय वृत्तिकारो दूषयति—नेत्यादिना । सम्विद्विरुद्धमिति, तत्र तदसत्त्वे अन्यत्र तत्सत्ताया: तत्र तज्ज्ञानाप्रयोजकत्वादिति भाव: ॥५५ ॥

ख्यातिविषये परमतनिरासकसूत्राणि व्याख्याय स्वमतप्रदर्शनपरं सूत्रमवतारयति—आरोपितेत्यादिना । सूत्रार्थं विवृणोति—इदमित्यादिना । बाधादिति नेदं रजतमिति निषेध-बुद्धिविषयत्वादित्यर्थ: । उपसंहरति—तस्मादित्यादिना, तथाच सदसत्ख्यातिरेव सांख्य-सिद्धान्त इति स्थितम् । नच सत्त्वासत्त्वयोर्व्विरोध इति च वचनीयं प्रकारभेदेनाविरुद्धत्वात् । यथाहि लौहित्यं बिम्बरूपेण सदपि स्फटिकादिगतप्रतिबिम्बरूपेणासदिति दृश्यते । एवं यथा घटादि: प्रकटाद्यवस्थाभि: सन्नप्यङ्कुराद्यवस्थाभिरसन् भवति, तथैवावस्थाभेदेनापि प्रकृत्यादीनां

---

নীয়স্বরূপেও নির্ব্বাচিত হইয়াছে, কেন না "ইহা অনির্ব্বচনীয়" এই কথা বলিলেও অনির্ব্বচনীয় বলিয়া নির্ব্বাচিত হইল ইহা অবশ্য স্বীকার্য্য ॥৫৪ ॥

অন্যথাখ্যাতিবাদী নৈয়ায়িকের মত দূষিতেছেন—তাঁহারা বলেন, "ইদং রজতং" এই স্থলে শুক্তিই রজতরূপে জ্ঞানের বিষয় হয়। ইহাও ঠিক নহে, কারণ অন্য বস্তু অন্যরূপে জ্ঞানের বিষয় হয়, ইহা অনুভববিরুদ্ধ ॥ ৫৫ ॥

আরোপিত রজতই ঐস্থলে জ্ঞানের বিষয় হয়, এই স্বমত বলিতেছেন—"ইদং রজতং"এই স্থলে ইদং পদের অর্থ পুরোবর্ত্তী বিষয়ত্ব পুরস্কারে সৎ, কারণ,

स्फोटं निराकरोति—

प्रतीत्यप्रतीतिभ्यां न स्फोटात्मकः शब्दः ॥ ५७ ॥

प्रतीतिः वर्णेषु, अप्रतीतिः स्फोटे। तस्मात् न स्फोटात्मकः शब्दः। यदि वर्णाः किञ्चिदपि न प्रतिपादयन्ति, स्फोटप्रतिपादनमपि कुतः? अथ प्रतिपादयन्ति, किमन्तर्गडुना स्फोटेन, वर्णाः एव प्रतिपादकाः सन्तु। नानात्वादपि न स्फोटसिद्धिः ॥ ५७ ॥

सर्व्वेषामेव सदसदात्मकत्वमविरुद्धमिति समन्वयम्। उक्तञ्च—अव्यक्तं कारणं यत्तन्नित्यं सदसदात्मकम्। प्रधानं प्रकृतिश्चेति यदाहुस्तत्त्वचिन्तकाः। इत्यन्यत्र विस्तरः॥ ५६ ॥

अथ वाक्यघटकवर्णाः प्रत्येकं वाक्यार्थमभिदधीरन् मिलिता वा? न तावत् प्रत्येकं एकवर्णोच्चारणानन्तरमर्थप्रत्ययादर्शनात् वर्णान्तरोच्चारणानर्थक्यप्रसङ्गाच्च, नापि मिलिताः प्रतिक्षणमपवर्गित्वेनैकवक्तृप्रयुक्तानां वर्णानां मिथः साहित्यासम्भवात्, नापि प्रत्येकसमुदायाभ्यामन्यः प्रकारः सम्भवतीति वर्णानामर्थप्रत्यायकत्वासम्भवात् कम्बुग्रीवाद्यवयवेभ्योऽतिरिक्तो घटाद्यवयवीव प्रत्येकवर्णेभ्योऽतिरिक्तः घट इत्याद्यखण्डैकपदात्मकः स्फोटः योगैरभ्युपगम्यते, अर्थस्फुटीकरणाच्च स्फोट इत्युच्यते इति तन्मतनिराकरणपरं सूत्रमवतारयितुमाह—स्फोटं निराकरोतीति। सूत्रार्थं विवृणोति—प्रतीतिरित्यादिना। विषयत्वं सप्तम्यर्थः तथाहि "घट" इत्याद्युक्ते घकाराकारटकाराकारादिविषयिण्या एव प्रतीतेः सर्व्वसिद्धत्वात् स्फोटविषयिण्याश्च प्रतीतेः कस्याप्यभावात् निष्प्रमाणकः स्फोटात्मकः शब्द इति भावः। ननु पूर्व्वोक्तयुक्त्या वर्णानामर्थप्रत्यायकत्वा-

---

তদ্রূপে তাহার বাধ হয় না। রজতবিষয়ত্ব পুরস্কারে অসৎ, কারণ তদ্রূপে বাধ হয়, অতএব সদসৎই তত্ত্ব, অর্থাৎ সদসৎখ্যাতিই সাংখ্যসিদ্ধান্ত ॥ ৫৬ ॥

শব্দের ঘটক প্রত্যেক বর্ণের বাক্যার্থপ্রতিপাদনের সামর্থ্য নাই, কারণ একবর্ণের উচ্চারণমাত্রে অর্থ প্রতীতি হয় না, তাহা হইলে অন্যবর্ণের উচ্চারণও ব্যর্থ হয়। সকল বর্ণ মিলিত হইয়াও অর্থ প্রতিপাদন করিতে পারে না, কারণ বর্ণের ক্ষণবিনাশিত্ব নিবন্ধন সাহিত্য অসম্ভব। অথচ প্রত্যেকও সমুদায় ভিন্ন অন্য কোন প্রকারেরও সম্ভব হইতে পারে না, অতএব বর্ণের অর্থ প্রতিপাদনসামর্থ্য না থাকায় পাতঞ্জল মুনি কম্বুগ্রীবাদি অবয়ব হইতে অতিরিক্ত ঘটাত্মক অবয়বীর ন্যায় প্রত্যেক বর্ণ হইতে অতিরিক্ত "ঘট" ইত্যাদি অখণ্ডপদাত্মক অর্থের প্রতিপাদক স্ফোটনামক শব্দ স্বীকার করেন—সেই

প্রত্যক্ষবাধাৎ বেদস্যানিত্যত্বমুক্তম্। বর্ণানামনিত্যত্বং প্রতিপাদয়তি---

**ন শব্দনিত্যত্বং কার্য্যতাপ্রতীতেঃ ॥ ৫৮ ॥**

প্রত্যক্ষাদিঃ শব্দশ্রবণানন্তরং নাস্তি ইতি প্রতীতেঃ। অন্যথা ঘটস্যাপি নিত্যত্বং স্যাৎ॥ ৫৮ ॥

---

सम्भवात् स्फोटात्मकशब्दस्य कथमर्थप्रतीतिरिति शङ्कामपनयति—यदीत्यादिना। ननु वर्णाः स्फोटं माभिव्यञ्जन्ताम्, स्फोटकल्पनापि न क्रियताम्, तथाप्युक्तयुक्त्या वर्णानामर्थप्रतिपादनासम्भवात् कथमर्थप्रतिपादनमिति प्रश्नादुत्तर इति चेन्न आनुपूर्व्वीविशेषवत् पूर्व्वपूर्व्ववर्णानुभवजनित-संस्कारसहितान्त्यवर्णेनार्थप्रतीतिसम्भवात्। अथवा तावद्वर्णा एव गृहीतार्थविशेषसम्बन्धाः स्वव्यवहारेऽप्यक्रमेणोच्चारणानन्तरं समस्तप्रत्यवमर्शिन्या बुद्धौ तादृशा एव प्रत्यवभासमानास्तन्त-मर्थमवगमयन्तीति साधयन्ति, ते स्फोटस्य स्फोटेन वार्थस्याधिगम इति कल्पनेच गौरवं परम-वशिष्यत इति विभावनीयम्। दोषान्तरमाह—नानात्वादिति, समानुपूर्व्वीमद्वर्णानामपि प्रत्यु-च्चारणं भिन्नत्वेन प्रतिवर्णानुपूर्व्वीमद्वर्णव्यञ्जनीयस्फोटकल्पनापत्तेरित्यर्थः। नन्वेवं घट इत्येकोऽयं शब्द इति बुद्धिः कथमुपपद्यत इति वाच्यं, वनसेनादिबुद्धिवत्तद्बुद्ध्युपपत्तेः कार्यावच्छेद-नियन्त्रणोपपत्तेरित्याद्यूह्यं विस्तरः ॥ ५७ ॥

---

সংক্ষেপে বুঝাইতেছেন—শব্দোচ্চারণ করিলে বর্ণবিষয়কই প্রতীতি হয়, স্ফোট-বিষয়ক প্রতীতি হয় না, অতএব স্ফোটাত্মক অতিরিক্ত শব্দ নাই। যদি বর্ণ-সকল কোন অর্থই প্রতিপাদন করিতে না পারে, তবে স্ফোটই প্রতিপাদিত হইবে কি প্রকারে? যদি স্ফোট প্রতিপাদন করিতে পারে, তবে বর্ণ স্ফোটাত্মক শব্দ প্রতিপাদন করে ও সেই স্ফোটাত্মক শব্দ অর্থ প্রতিপাদন করে, এইরূপ গুরুতর কল্পনা না করিয়া বর্ণ অর্থ প্রতিপাদন করে, এই কল্পনাই সঙ্গত। বর্ণ অর্থের প্রতিপাদন করে কি প্রকারে? এই প্রশ্নের উত্তরে বক্তব্য এই যে, পূর্ব্ব পূর্ব্ব বর্ণের স্মৃতি সহকারে অন্তিম বর্ণ দ্বারাই অর্থের প্রতিপাদন হইতে পারে, কারণ তাহা হইলে সেই স্মৃতির জনক সংস্কার সম্পাদন আবশ্যক বলিয়াই অন্য বর্ণের উচ্চারণ ব্যর্থ হয় না। সমানানুপূর্ব্বীমৎ বর্ণসকলও প্রতি উচ্চারণ ভেদে ভিন্ন, অতএব একবিধ আনুপূর্ব্বীমদ্ বর্ণ হইতেও উচ্চারণ-ভেদে অনন্ত স্ফোট কল্পনা করিতে হয়, অতএব এই গৌরববশতঃই অতিরিক্ত স্ফোটের সিদ্ধি হয় না॥ ৫৭ ॥

प्रकृतिपुरुषादन्यत् सर्वं कार्य्यमिति प्रतिपादनार्थं शङ्कते—

पूर्वसिद्धसत्त्वस्याभिव्यक्तिर्दीपेनेव घटस्य ॥ ५९ ॥

यथा अन्धकारस्थो घटः दीपेनाभिव्यज्यते, तथा वर्णाः ध्वनिभिः व्यज्यन्ते। तदभावात् न सन्ति इति प्रतिभानं, न तु असत्त्वात् ॥ ५९ ॥

सूत्रान्तरमवतारयति—प्रत्यक्षबाधादित्यादिना। सूत्रे कार्य्यताप्रतीतेरिति उत्पन्नः ककार इत्यादिजन्यताबुद्धेरित्यर्थः। इदमुपलक्षणं विनष्टः ककार इति विनष्टत्वप्रतीतेरित्यपि बोध्यम्। एतदभिप्रायेणैव वृत्तिकारो व्याचष्टे—प्रत्यक्षादेरित्यादिना। प्रत्यक्षादेः—प्रत्यक्षप्रमाणतः श्रवणेन्द्रियादिति यावत्। अन्यथा—नास्तीत्यादिप्रतीतिविषयस्यापि नित्यत्वे। न च सोऽयं ककार इत्यादि प्रत्यभिज्ञाबलादेव वर्णानां नित्यत्वं सेत्स्यतीति वाच्यं, तत्प्रत्यभिज्ञायाः सामान्यालम्बनकत्वस्योक्तत्वादिति ध्येयम् ॥ ५८ ॥

अत्र पूर्व्वपक्षसूत्रमवतारयति—प्रकृतीत्यादिना। दृष्टान्तं विशद्य सूत्रतात्पर्य्यं स्पष्टयति—यथेत्यादिना। तथाचाभिव्यक्तिरेवोत्पत्तिप्रतीतेर्व्विषयः तदभिव्यञ्जकध्वन्यभावस्तु नास्तीति प्रतीतेर्व्विषय इति न तत्प्रतीतिभ्यां शब्दानामनित्यत्वं साधनीयमिति पूर्व्वपक्षः ॥ ५९ ॥

---

বর্ণের অনিত্যত্যপ্রত্যক্ষের বাধ হয় বলিয়া বর্ণাত্মক বেদের অনিত্যতা বলিয়াছেন, অতএব বর্ণের অনিত্যতা প্রতিপাদন করিতেছেন—শ্রবণেন্দ্রিয় দ্বারা শব্দ শ্রবণানন্তর ককার উৎপন্ন ককার নাই ইত্যাদি প্রতীতি হয় বলিয়াই বর্ণ নিত্য নহে। তাদৃশ প্রতীতি সত্ত্বেও নিত্যতা স্বীকার করিলে ঘটাদিরও নিত্যত্ব হইতে পারে ॥ ৫৮ ॥

এই স্থলে শব্দ নিত্যতাবাদিগণ যদি বলেন যে, অন্ধকারস্থিত ঘট যেমন দীপদ্বারা অভিব্যক্ত হয়, সেইরূপ বর্ণও ধ্বনিদ্বারা অভিব্যক্ত হয় এবং সেই অভিব্যক্তির অভাব বশতঃই নাই বলিয়া প্রতীতি হয়, অসত্ত্বনিবন্ধন নহে, অর্থাৎ অভিব্যক্তিই উৎপত্তিপ্রতীতির বিষয় ও অভিব্যক্তির অভাবই নাই এই প্রতীতির বিষয়, বস্তুতঃ বর্ণের তদতিরিক্ত উৎপত্তি বা বিনাশ নাই।

তদুত্তরে বক্তব্য এই যে, অভিব্যক্তি অবলম্বনে বর্ণের নিত্যত্ব প্রতিপাদন

समाधानमाह—

**सत्कार्य्यसिद्धान्तश्चेत् सिद्धसाधनम् ॥ ६० ॥**

अभिव्यक्तिमाश्रित्य नित्यत्वमुच्यते, ततः सत्कार्य्यसिद्धान्तः चेत्, सिद्धसाधनम् ॥ ६० ॥

एक एवात्मा । तथा च "सितनीलादिभेदेन यथैकं दृश्यते नभः । भ्रान्तदृष्टिभिरेवात्मा तथैकः सन् पृथक् पृथक्" ॥ इति, तन्निराकरोति—

**नाद्वैतमात्मनः, लिङ्गात्तद्भेदप्रतीतेः ॥ ६१ ॥**

जरामरणादिलिङ्गनियमात् । पूर्वत्र सिद्धवत उक्तम्, इदानीं साध्यते इति अपौनरुक्त्यम् ॥ ६१ ॥

---

समाधानमिति, पूर्व्वसूत्रोक्तपूर्व्वपक्षस्योत्तरमित्यर्थः । सूत्रतात्पर्य्यं विवृणोति—अभिव्यक्तिमित्यादिना । सिद्धसाधनमिति सत्कार्य्यवादिसांख्यमते तत्त्वमात्रस्यैव तादृशनित्यत्वेन शब्दस्यापि तादृशनित्यत्वस्येष्टत्वात् सिद्धसाधनमित्यर्थः ॥ ६० ॥

एकात्मवादनिराकरणपरं सूत्रमवतारयितुं प्रथममेकात्मवादं दर्शयति—एक एवेत्यादिना । यथा एकं नभः आरोपितेन पार्थिवादिसितनीलादिरूपभेदेन भ्रान्तदृष्टिभिः पृथक् पृथक् प्रतीयते, तथैवात्मा एकः सन्नपि अन्तःकरणाद्युपाधिभेदेन प्रति देहं पृथक् पृथगिव प्रतीयत इति श्लोकार्थः । जरामरणादिलिङ्गनियमादिति, आत्मन एकत्वे तु एकस्य जरामरणादिभिः सर्व्वेषां जरामरणादि-

করিলে ফলে সৎকার্য্যসিদ্ধান্তই স্বীকার করিতে হয়, তাহা হইলে সিদ্ধসাধন দোষ হয়। কারণ সৎকার্য্যবাদী সাংখ্যমতে তাদৃশ নিত্যত্ব বস্তুমাত্রেরই স্বীকার্য্য, সুতরাং শব্দেও তাদৃশ নিত্যত্ব স্বীকৃত বিধায় সাধনের কোনও প্রয়োজন নাই। ৫৯—৬০ ॥

কেহ কেহ বলেন আত্মা এক. যেরূপ আকাশ এক হইয়াও আরোপিত পৃথিবীর শ্বেতকৃষ্ণাদিরূপ ভেদে ভ্রান্ত দৃষ্টি কর্ত্তৃক পৃথক্ পৃথক্ বলিয়া প্রতীয়মান হয়, সেইরূপ আত্মাও এক হইয়া অন্তঃকরণাদি উপাধিভেদে প্রতি দেহে পৃথক্ পৃথক্ বলিয়া প্রতীয়মান হয়, বস্তুতঃ আত্মা নানা নহে। এই মতের নিরাস করিতেছেন—আত্মা এক নহে, কারণ আত্মা এক হইলে জন্মমরণা-

मा भूत् सजातीयाद्वैतम्, "अनात्मानो भविष्यन्ति घटादयस्त्वात्मरूपाः" इति विजातीयाद्वैतं भविष्यति इत्यत्राह—

**नानात्मनापि, प्रत्यक्षबाधात् ॥ ६२ ॥**

न अनात्मना घटादिना आत्मनः एकत्वं, घटादीनां बाह्यत्वेन भेददर्शनात्। एकत्वे घटादीनाम् आत्मत्वम्, आत्मनश्च परिणामित्वम् इति ॥ ६२ ॥

सजातीयविजातीयाद्वैतं भविष्यति इत्यत्राह—

**नोभाभ्यां, तेनैव ॥ ६३ ॥**

अबाधितप्रत्ययेनैव, भेददर्शनात् ॥ ६३ ॥

सर्वं न कस्यचिदिव जरामरणादिकं कस्यचिन्नेति नियमो नोपपद्यत इत्यर्थः। "जन्मादिव्यवस्थातः पुरुषबहुत्व"मिति प्रथमाध्यायसूत्रेण पौनरुक्त्यमपाकर्त्तुमाह—पूर्व्वमिति ॥ ६१ ॥

सूत्रान्तरमवतारयति—माभूत्यादिना। सूत्रार्थं विवृणोति—नेत्यादिना। दोषान्तरमाह—एकत्व इत्यादिना, आत्मत्वं—चेतनत्वं, परिणामित्वं जड़त्वं, तथाच तन्मते सर्व्वानुभवसिद्धा विजातीयभेदव्यवस्थापि विलुप्यतेति भावः ॥ ६२ ॥

सूत्रान्तरमवतारयति—सजातीयेत्यादिना। उभाभ्यां—आत्मानात्मभ्यां नाद्वैतमिति सूत्रार्थः। तत्र हेतुप्रतिपादकं तेनैवेतिपदं व्याचष्टे अबाधितप्रत्ययेनैवेति, "अहं सुखी" "अहं दुःखी" "अयं घटः" "अयं पटः" इत्याद्यबाधितभेदबोधकप्रत्ययेनेत्यर्थः। अबाधितत्वे हेतुं दर्शयति—भेददर्शनादिति ॥ ६३ ॥

দির ব্যবস্থা হয় না। অর্থাৎ কেহ ব্যাধিগ্রস্ত নহে, কেহ মরিতেছে, কেহ জন্মিতেছে—এইরূপ হইতে পারে না। "জন্মাদিব্যবস্থাতঃ পুরুষবহুত্বং" এই প্রথমাধ্যায়সূত্রে সিদ্ধরূপে আত্মার বহুত্ব বলা হইয়াছে—এই সূত্রে সাধ্যরূপে বলা হইল, সুতরাং পুনরুক্ততা দোষ হইল না ॥ ৬১ ॥

পূর্ব্বোক্ত সজাতীয়দ্বৈতবাদ হইলেও অনাত্ম ঘটাদি সমস্ত পদার্থই আত্মস্বরূপ, এই বিজাতীয়াদ্বৈতবাদ অর্থাৎ—আত্মা নানা হইলেও দৃশ্যমান ঘটপটাদি সমস্তই আত্মস্বরূপ এই সিদ্ধান্ত হইবে, এই আশঙ্কায় বলিতেছেন—"অনাত্ম ঘটাদির সহিত আত্মার একত্ব হইতে পারে না, কারণ বাহ্যরূপে ভিন্ন বলিয়া ঘটাদির প্রত্যক্ষ হয়। এবং একত্বস্বীকার করিলে ঘটাদির আত্মত্ব অর্থাৎ চেতনত্ব ও আত্মার পরিণামিত্ব হইতে পারে ॥ ৬২ ॥

एवम् अद्वैतश्रुतिविरोधः इत्यत आह—

**अन्धपरत्वमविवेकानां तत्र ॥ ६४ ॥**

अन्धानां तच्छ्रुतिः अन्यपरत्वं—सामान्यपरत्वम् ॥ ६४ ॥

एकात्मवादिनां जगदुपादानकारणमपि नास्तीत्याह—

**नात्माविद्या नोभयं जगदुपादानकारणं निःसङ्गत्वात् ॥ ६५ ॥**

कूटस्थत्वात् न आत्मा कारणम् । अविद्यायाः असत्यत्वात् न कारणत्वम् । सत्यत्वे अद्वैतहानिः । सम्बन्धाभावात् न उभयं कारणम् ॥ ६५ ॥

एवमिति—आत्मनो नानात्वे घटपटादिस्वरूपत्वाभावे चेत्यर्थः, अद्वैतश्रुतिविरोधः— "आत्मैवेदं सर्व्वं" "ब्रह्मैवेदं सर्व्व"मित्यादि श्रुतिविरोधः । अन्धानामिति अविवेकिनामित्यस्य विवरणम्, ये समस्तमनन्तं भेदं पश्यन्तोऽपि श्रुतीनामद्वैतपरत्वे श्रद्धधीरन्, ते अन्धा वेति-भावः । तच्छ्रुतेः—आत्मैवेदं सर्व्वमित्यादिश्रुतेः, सामान्यपरत्वं—आत्मनः सामान्यभेद-बोधकत्वं अनुमतामिति शेषः, नतु विवेकिनामिति भावः । विवेकिनस्तु प्रत्यक्षबाधितोक्त-श्रुतीनामुपासनादिप्ररोचकात्मप्रशंसापरत्वमवधारयन्तीति स्थितम् ॥ ६४ ॥

सूत्रान्तरमवतारयति—एकेत्यादिना । सूत्रार्थं विवृणुन् कूटस्थत्वादिति, अपरिणामि

বাহ্য বস্তু মাত্রই যে আত্মা হইতে ভিন্ন ইহা প্রত্যক্ষসিদ্ধ, "আমি সুখী" "তুমি দুঃখী" "এইটি ঘট" "এইটি পট" ইত্যাদি জ্ঞানও অবাধিত, সুতরাং এই সকল অবাধিত প্রত্যয় বলেই সজাতীয় বিজাতীয়াদ্বৈতবাদও ঠিক নহে ॥ ৬৩ ॥

আত্মা যদি নানা হয় ও দৃশ্যমান বস্তুসকলও যদি আত্মা হইতে ভিন্ন হয়, তবে "আত্মৈবেদং সর্ব্বং" "ব্রহ্মৈবেদং সর্ব্বমিত্যা"দি শ্রুতির সহিত বিরোধ হইয়া পরে, এই আশঙ্কায় বলিতেছেন—মূঢ় ব্যক্তিরাই এই শ্রুতি অনুসারে আত্মার জগৎস্বরূপত্ব স্বীকার করে। বস্তুতঃ প্রত্যক্ষবাধবশতঃ ঐসকল শ্রুতির উপাসনাদি প্ররোচক আত্মপ্রশংসাপরত্বই বিবেকিগণের অভিপ্রেত ॥ ৬৪ ॥

একাত্মবাদীর মতে জগতের উপাদান কারণও সিদ্ধ হয় না, কারণ

चिदानन्दस्वरूपः आत्मा इत्यत्राह—

**नैकस्यानन्दचिद्रूपत्वे द्वयोर्भेदात् ॥ ६६ ॥**

आनन्दः—सुखम्। चित्—ज्ञानम्। आनन्दचिद्रूपत्वे द्वैतत्वापत्तिः। न च 'आनन्दो न विषयजं सुखं', चितिर्वा वृत्तिज्ञानं, किन्त्वन्यदेवालौकिकम्' इति वाच्यं, अलौकिकत्वेनाप्रामाणिकत्वात्। प्रामाणिकत्वे प्रमाणसत्त्वेनैव द्वैतत्वम्। किञ्च, आत्मनः आनन्दरूपत्वं आनन्दधर्मत्वं वा। आनन्दधर्मत्वे द्वैतत्वापत्तिः,

नित्यत्वादित्यर्थः। सत्यत्व इति अविद्याया इत्यादिः। सम्बन्धाभावादिति निःसङ्गत्वादित्यस्य विवरणम्, सदसतोः सम्बन्धानुपपत्तेरिति तदर्थः, उभयं—अविद्योपहितं ब्रह्म, कारणं—जगदुपादानकारणं भवितुमर्हतीत्यर्थः ॥ ६५ ॥

सूत्रान्तरमवतारयति—चिदित्यादिना। सूत्रोक्तं चिदानन्दयोर्भेदं दर्शयितुं व्याचष्टे—आनन्दः सुखं चित् ज्ञानमिति। तथाच ज्ञानसुखयोर्भेदः सर्वानुभवसिद्ध इति भावः। ननु भवतु भेदस्तथापि तदुभयस्वरूपत्वमेवात्मनोऽस्तु ? इत्यतो दोषं दर्शयति—आनन्देत्यादिना। शङ्कते—नचेति, तथाचालौकिकत्वेन नोभयोर्भिन्नत्वमित्याशयः। दोषान्तरं दर्शयितुमाह—किञ्चेति। अविद्यातिरोधानात्—अविद्यया आवरणात् नानुभूयत इत्यर्थः। अमूर्त्तत्वात्—अद्रव्यत्वात्, कुड्यादिद्रव्याणामेव घटादिप्रावरकत्वं दृश्यते, तद्वैधर्म्यान्नाविद्यायाः प्रावरकत्वं सम्भवतीति भावः। अविद्यया तिरोधानमुपपादयितुं तिरोधानशब्दस्यार्थान्तरं शङ्कते—नचेति,

---

অপরিণামি নিত্যত্বনিবন্ধন আত্মা কারণ হইতে পারে না, মিথ্যাত্ববশতঃ অবিদ্যাও কারণ হইতে পারে না। অবিদ্যাকে সত্য স্বীকার করিলে অদ্বৈত বাদের হানি হয়। সত্য ও মিথ্যার সম্বন্ধ থাকে না বলিয়া অবিদ্যোপহিত আত্মাও কারণ হইতে পারে না॥ ৬৫॥

এক আত্মার আনন্দ ও চিৎস্বরূপত্ব হইতে পারে না, কারণ আনন্দ—সুখ ও চিৎ-জ্ঞান, সুতরাং ভিন্ন। পরন্তু উভয়স্বরূপ স্বীকার করিলে দ্বৈতত্বের আপত্তি হয়। "আনন্দ বিষয়জন্য সুখ নহে, চিৎও বৃত্তিজ্ঞান নহে, কিন্তু তাহারা অন্য কোনও অলৌকিক পদার্থ" (সুতরাং আনন্দ ও চিৎ ভিন্ন নহে) এই কথাও বলা যাইতে পারে না, কারণ তাহাদের অলৌকিকত্বে কোনও প্রমাণ নাই,

निर्गुणत्वादिश्रुतिविरोधश्च। आनन्दरूपत्वे संसारावस्थायां कथम् आनन्दः न अनुभूयते। अविद्यातिरोधानादिति चेत्, अमूर्त्तत्वात् अविद्यायाः न तया कुड्यवत् तिरोधानसम्भवः। अथ अभिभवः तिरोधानशब्दार्थः। नित्यस्य विभुनः न अभिभवः। अविद्यायाः मिथ्यात्वात् आत्मनः सत्यत्वात् नानयोः सम्बन्धः, वस्त्ववस्तुनोः सम्बन्धाभावात्, सम्बन्धे वा निःसङ्गादिश्रुतिविरोधः। आनन्दानुभवे च कर्मकर्त्तृविरोधः। किञ्च आनन्दात्मत्वे किं प्रमाणम्? किं प्रमाणानुसरणेन स्वयमेव प्रमाणरूपत्वादात्मन इति चेत्, तत् न, प्रमाणव्यवस्थार्थं प्रमेयस्वीकारात्। प्रमेयाभावात् किं प्रमाणेन परिच्छेत्तव्यम्? प्रमित्यप्रधानाभावाच्च प्रमाणत्वमेव नास्ति। चिद्रूपत्वं च

अभिभवः—अन्यथापरिणतिः, नित्यस्य—अपरिणामिनित्यस्य। सम्बन्धासम्भवेनाविद्यायाः तिरोधानाद्युत्पादसामर्थ्यमपि नास्ती। आवेदयितुं सम्बन्धासम्भवं दर्शयति—अविद्याया इत्यादिना। तुष्यतु दुर्जन इति न्यायेनाह—सम्बन्धे वेति। आत्मन आनन्दस्वरूपत्वे दोषान्तरं दर्शयति—आनन्दानुभवे चेति, कर्मकर्त्तृविरोधः—स्वस्मिन्नेव स्वकर्मकानुभवकर्त्तृत्वाङ्गीकारप्रसङ्गः। आपादित इति शेषः। आत्मन आनन्दरूपत्वे प्रमाणभूतस्यात्मन एव प्रमाणत्वं सम्भवतीति नास्ति प्रमाणान्तरापेक्षेति प्रतिवादी समाचष्ट किं प्रमाणमित्यादिना। दूषयति—तन्नेति, प्रमाणव्यवस्थार्थं प्रमेयस्वीकारादिति प्रमेयमेदस्वीकाराधीनत्वात् प्रमाणव्यवस्थाया इत्यर्थः। परिच्छेत्तव्यं—स्वजन्यप्रमितिविषयीकर्त्तव्यम्, तथाच प्रमेयाभावे प्रमाणव्यवस्थायाः प्रयोजनमेव न सिध्येदिति भावः।

যদি প্রমাণ থাকে, তবে পুনরায় সেই দ্বৈতত্বাপত্তি হয়। আরও দোষ এই যে, তাহাদের মতে আত্মা আনন্দস্বরূপ, অথবা আনন্দ আত্মার ধর্ম্ম? যদি আনন্দ আত্মার ধর্ম্ম হয়, তবে দ্বৈতত্বাপত্তিও নির্গুণত্বাদি শ্রুতিবিরোধ হয়। আনন্দস্বরূপ স্বীকার করিলে বক্তব্য এই যে, সংসার দশাতে আনন্দরূপে অনুভূত হয় না কেন? অবিদ্যার আবরণবশতঃ অনুভূত হয় না, ইহাও বলা চলে না, কারণ —অবিদ্যার অমূর্ত্তত্বনিবন্ধন কুড্যাদির ন্যায় তদ্দ্বারা তিরোধানের অসম্ভব। তিরোধান শব্দের অর্থ এস্থলে অভিভব বলিলেও ফল নাই, কারণ নিত্য এবং বিভুর অভিভবও অসম্ভব। পরন্তু অবিদ্যা মিথ্যা এবং আত্মা সত্, সুতরাং উভয়ের সম্বন্ধও হইতে পারে না, কারণ বস্তু ও অবস্তুর সম্বন্ধ নাই, সম্বন্ধ

न आनन्दरूपत्वं, द्वयोर्भेदात्। तयोरलौकिकत्वेन अभेदसिद्धिरित्यपि न, अलौकिकत्वादेव व्याप्तिग्रहणाभावात्। ततो नात्मनो द्विरूपत्वम् इति। यदि च मुक्तावानन्दो नानुभूयते, किं तेन? अनुभूयते चेत्, अनुभवितनुभवानुभवनीयाः वाच्याः। यथा च यावद्देहभावित्वेन आत्मसाक्षात्कारादपि समाधिरित्युच्यते, देहपातानन्तरमात्मनः स्थितिरिति क्व समाधिः? तथा च 'समाधौ सकलदुःखनिवृत्तेः आनन्दलाभः' इति अभिमन्यते। देहाभावात् समाधिनाम्नि क्व आनन्दानुभवः। एवं च मुक्तौ आनन्दानुभवो भ्रान्त इति॥ ६६॥

दोषान्तरं दर्शयितुमाह—प्रमितुरपत्वानाभावादिति, प्रमितिविशेषासाधारणकारणत्वाभावादित्यर्थः। सूत्रार्थमुपसंहर्त्तुमुक्तप्रायमप्यर्थं पुनरभिधत्ते—चिद्रूपत्वञ्चेत्यादिना। अलौकिकत्वात्—प्रमाणागोचरत्वात्, व्याप्तिग्रहणाभावात्—अभेदानुमापकव्याप्तिज्ञानासम्भवात्, चिदानन्दयोरभेदस्य सर्व्वप्रमाणागोचरत्वेन ततसहचरिततया कस्यापि हेतोर्ज्ञानासम्भवादिति भावः। उपसंहरति तत इति। अद्वैतवादिमते दोषान्तरमुद्घोषयितुं वक्तामाणसूत्रावतारणस्यावकाशमासादयितुमाह—यदिचेति। वाच्या इति, तथाच द्वैतापत्तिदोष इत्याशयः। मुक्तौ वेदान्तिनामानन्दानुभवसिद्धान्तो भ्रान्त इत्यभिधास्यन् दृष्टान्तविधया तत् सिद्धान्तस्यान्यत्रापि भ्रान्तत्वं दर्शयति—यथाचेत्यादिना। उच्यत इति वेदान्तिभिरिति शेषः, क्व समाधिरिति देहावच्छेदेनैवात्मसाक्षात्-

স্বীকার করিলে নিঃসঙ্গশ্রুতিবিরোধরূপ দোষও আপতিত হয়। আত্মা আনন্দস্বরূপ হইলে আরও দোষ এই যে, আনন্দানুভবে কর্ম্মকর্ত্তৃবিরোধ হয়, অর্থাৎ এক আত্মাই অনুভবের কর্ত্তা ও কর্ম্ম হইয়া পরে, (একেতে একক্রিয়ার কর্তৃত্ব ও কর্ম্মত্ব কাহারও স্বীকার্য্য নহে) পরন্তু আত্মার আনন্দস্বরূপত্বে প্রমাণ কি? আত্মা স্বয়ংই প্রমাণ বলিয়া তাহাতে অন্য প্রমাণের অপেক্ষা নাই, ইহাও বলা যায় না, কারণ প্রমেয়ভেদ অনুসারেই প্রমাণ ব্যবস্থা হইয়া থাকে; যেমন রূপরসাদি বিভিন্ন প্রমেয় আছে বলিয়াই চক্ষু রসনাদি পৃথক্ পৃথক্ প্রমাণ স্বীকৃত হইয়াছে। প্রমেয়াভাবে প্রমাণ দ্বারা কি প্রমাণীকৃত হইবে? (সুতরাং যাহা আত্মাদ্বারা প্রমণীকৃত হইতে পারে, এরূপ কোন প্রমেয় নাই বলিয়াই আত্মা স্বয়ং প্রমাণ নহে) প্রমিতিবিশেষের অসাধারণ কারণত্ব নাই বলিয়াও আত্মাতে প্রমাণত্ব নাই। চিদ্রূপত্বই যে আনন্দরূপত্ব তাহাও ঠিক

अथानन्दश्रुतेः का वार्त्ता ? तत्र च—"आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन। यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह॥" इति ( तैत्ति ०६ प ० २ वल्ली ०४।८ अनु ) अत्राह—

**दुःखनिवृत्तेर्गौणः ॥ ६७ ॥**

व्यक्तम् ॥ ६७ ॥

---

कारस्य समाधित्वानुभावकतया देहपातानन्तरं तदुभयोरेवासम्भवादिति भावः। दार्ष्टान्तिकं दर्शयति—तथाचेत्यादिना, अभिमन्यत इति, न तु वस्तुगत्या तदानीमानन्दानुभव इति भावः, अत्र हेतुमाह—देहाभावादित्यादिना। तथाहि—यथा वेदान्तिभिरङ्गीकृत आत्मसाक्षात्कारान्मुक्तौ समाधिरिति सिद्धान्तो भ्रान्तस्तथा मुक्तावानन्दानुभवसिद्धान्तोऽपि भ्रान्त इति समुदितवाक्यार्थः। तथैवोपसंहर्त्तुमाह—एवञ्चेति ॥ ६६ ॥

सूत्रान्तरमवतारयितुं पृच्छति—अथेति। का वार्त्ता – कथं प्रामाण्यम् श्रुतिं दर्शयितुमाह तथाचेति। व्यक्तमिति उक्तश्रुतावानन्दपदं दुःखनिवृत्तिपरमिति सूत्रतात्पर्यं स्पष्टमित्यर्थः ॥ ६७ ॥

---

নহে, যে হেতু উভয়ের ভেদ আছে। তাহাদের অলৌকিকত্বনিবন্ধন অভেদ সিদ্ধি হইবে, ইহাও বলা যায় না, কারণ অলৌকিকত্ববশতঃই অভেদানুমাপক ব্যাপ্তি গ্রহণই অসম্ভব। অতএব আত্মা চিৎ ও আনন্দ এই উভয়রূপ নহে। ( বেদান্তিদের ইহাও বক্তব্য যে ) যদি মুক্তিকালে আনন্দ অনুভূত না হয়, তবে সেই আনন্দ কল্পনার প্রয়োজন কি ? যদি অনুভূত হয়, তবে অনুভবিতা, অনুভব ও অনুভাব্য স্বীকার করিতে হয়। ( ফলে দ্বৈতাপত্তি দোষ হয় ) দেহপাতানন্তর আত্মার স্থিতি সত্ত্বেও সমাধি হইতে পারে না বলিয়া যেমন যাবদ্দেহভাবিত্ব বশতঃ আত্মসাক্ষাৎকার হইতেও সমাধি হয়" এই বেদান্তিসিদ্ধান্ত ভ্রান্ত, সেইরূপ মুক্তিতে আনন্দানুভব সিদ্ধান্তও ভ্রান্ত। কারণ সমাধিতে সকল দুঃখনিবৃত্তি হয় বলিয়া আনন্দলাভের অভিমান হয় মাত্র, বস্তুতঃ দেহাভাববশতঃ সমাধিনাশে আনন্দানুভব হইতে পারে না ॥ ৬৬ ॥

তবে আনন্দময়ত্ব শ্রুতির প্রামাণ্য হয় কিরূপে ? যথা শ্রুতিতে আছে— যাহাকে বর্ণনা করিতে না পারিয়া বাক্যসকল মনের সহিত নিবৃত্ত হয়, সেই ব্রহ্মের আনন্দস্বরূপ যিনি জানেন, তিনি কিছুতেই ভীত হন না" এই আশঙ্কায় বলিতেছেন—শ্রুতিতে যে, আনন্দ শব্দের প্রয়োগ আছে, তাহা দুঃখনিবৃত্তি লক্ষ্য করিয়াই প্রযুক্ত হইয়াছে, প্রকৃত আনন্দ বুঝাইবার জন্য নহে ॥ ৬৭ ॥

प्रकारान्तरमाह—

**विमुक्तिप्रशंसा मन्दानाम् ॥ ६८ ॥**

मन्दानां—तामसानाम्। विमुक्तिप्रशंसा—प्रवर्त्तनार्थं प्रोत्साहनम् इति ॥ ६८ ॥

मनोवैभवं निराकरोति—

**न व्यापकत्वं मनसः करणत्वादिन्द्रियत्वाद्वा, वास्यादिवच्चक्षुरादिवच्च ॥ ६९ ॥**

यत् च 'शिरसि मे वेदना, पादे मे सुखम्' इति ज्ञानं मनसः विभुत्वं प्रतिपादयति, तदाशुसञ्चारित्वात् क्रमाग्रहणनिमित्तम्। नानेन विभुत्वसिद्धिः ॥ ६९ ॥

दूषणान्तरमाह—

**सक्रियत्वाद्गतिश्रुतेः ॥ ७० ॥**

सक्रियत्वात् इति अनुमानं दर्शितम्। गतिश्रुतेः इति शब्दः दर्शितः ॥ ७० ॥

---

प्रकारान्तरमिति, उक्तश्रुतावानन्दपदस्योपपत्त्यन्तरमित्यर्थः। तामसानामिति राजसानामप्युपलक्षकम्। अन्यत् स्पष्टम् ॥ ६८ ॥

मनो वैभवमिति मनसो विभुत्वमित्यर्थः। मनसो विभुत्वसाधकतया परैरभिहितां युक्तिं खण्डयति—यच्चेत्यादिना ॥ ६९ ॥

---

অথবা শ্রুতিতে যে আনন্দোৎকীর্ত্তন আছে, তাহা মূঢ় ব্যক্তিদিগকে মুক্তি বিষয়ে প্রোৎসাহিত করিবার জন্য ॥ ৬৮ ॥

করণত্ব ও ইন্দ্রিয়ত্বনিবন্ধন মন ব্যাপক পদার্থ নহে, যেমন বাস্যাদি করণ ও চক্ষুরাদি ইন্দ্রিয় ব্যাপক নহে। মস্তকে বেদনা, পদে সুখ ইত্যাদি জ্ঞানবলে যে মনের সর্ব্বদেহব্যাপকতা অনুভূত হয়, মনের শীঘ্রসঞ্চারিত্ব বশতঃ ক্রমের অজ্ঞানই তাহার কারণ। বস্তুতঃ তদ্দ্বারা মনের বিভুত্ব সিদ্ধি হয় না ॥ ৬৯ ॥

अणुत्वेऽपि कारणाभावात् नित्यं भविष्यति इत्यत आह—

**न निर्भागत्वं, तद्योगाद्घटादिवत् ॥ ७१ ॥**

न निर्भागत्वं—न अकारणवत्त्वम्। तद्योगात्—भागयोगात्। किमस्य कारणम्? अहङ्कारः। षट्केन युगपद्योगात् परमाणूनां सभागत्वसिद्धिः। तस्मादघटादिवदनित्यं मनः ॥ ७१ ॥

नित्यानित्यविभागमाह—

**प्रकृतिपुरुषयोरन्यत्सर्वमनित्यम् ॥ ७२ ॥**

स्पष्टम् ॥ ७२ ॥

दूषणान्तरमिति, मनसो विभुत्व इत्यादिः। यस्य च सक्रियत्वं विद्यते, तस्य व्यापकत्वं नास्तीति प्रत्यक्षसिद्धमेवेति सक्रियत्वात् न विभुमन इति भावः ॥ ७० ॥

सूत्रान्तरमवतारयति—अणुत्वेऽपीत्यादिना। सूत्रं व्याचष्टेनेत्यादिना, पूर्व्वसूत्रान्मनस इत्यनुवर्त्तनीयम्। भागयोगादिति कारणयोगादित्यर्थः। अस्य—मनसः। प्रसङ्गात् परमाणुनिरवयवत्वावादिमतं खण्डयितुमाह—षट्केनेति, पूर्व्वपश्चिमोत्तरदक्षिणोर्द्ध्वाधोरूपदिक्-षट्केन इत्यर्थः, सभागत्वसिद्धिः सावयवत्वसिद्धिः, उपसंहरति—तस्मादित्यादिना। भाष्यकारस्तु—"युगपदनेकेन्द्रिययोगात् मनसो न निरवयवत्व" मिति सूत्रार्थं वर्णितवानित्यनुसन्धेयम् ॥ ७१ ॥

सूत्रान्तरावतरणिकामाह—नित्येत्यादिना। अनित्यत्वञ्चात्र आविर्भावादिमत्त्वं तद्विरहितत्वमेवच नित्यत्वमिति मन्तव्यम् ॥ ७२ ॥

মন সক্রিয় এবং শ্রুতিতে তাহার গতিও বর্ণিত আছে, তজ্জন্যও মন বিভু হইতে পারে না, কারণ বিভু পদার্থের গত্যাদি পরিদৃষ্ট হয় না ॥ ৭০ ॥

অণু হইলেও তাহার কারণ নাই বলিয়া সে নিত্য হইবে, এই আশঙ্কায় বলিতেছেন—মন কারণরহিত নহে, যে হেতু অহঙ্কারই মনের কারণ, ঊর্দ্ধ অধঃ, উত্তর, দক্ষিণ, পূর্ব্ব ও পশ্চিম এই ছয়টিদিকের সহিত এক সময়েই যোগ হয় বলিয়া পরমাণুগণও নিরবয়ব নহে, সুতরাং ঘটাদির ন্যায় মনও অনিত্য ॥ ৭১ ॥

প্রকৃতি ও পুরুষ ব্যতিরিক্ত সমস্ত পদার্থই অনিত্য ॥ ৭২ ॥

